कृत वाक्यार्थ निर्णय और शालिकनाथ कृत **वाक्यार्थ मातृका वृत्ति** में द्रष्टव्य है। विस्तार भय से हम उसकी चर्चा यहाँ न करेंगे।

पद में अभिधा शक्ति स्वीकार करने वाले आचार्यों के मत में अभिधा-शक्ति से प्रत्येक पद के अर्थ की पृथक्-पृथक् प्रतीति होने पर उन का परस्पर अन्वय होता है उसके अनन्तर अन्वित वाक्यार्थ की प्रतीति लक्षणा द्वारा होती है ऐसा प्राचीन मीमांसकों का मत है। परवर्ती आचार्यों ने उपर्युक्त लक्षणा पद और लक्षणाशक्ति के लिए प्रयुक्त लक्षणा पद के अर्थों में भ्रम न हो इस दृष्टि से वाक्यार्थ का बोध कराने वाली शक्ति को तात्पर्य शक्ति के नाम से स्मरण किया है। स्मरणीय है कि पूर्ववर्त्ती आचार्य वर्त्तमान काल में विदित लक्षणा शक्ति के लिए प्रायः **गुणवृत्ति** शब्द का प्रयोग करते रहे हैं। तथा उनके अनुसार जहाँ अविनाभाव वश अतिरिक्त अर्थ की प्रतीति होती है वहाँ अर्थबोधक शक्ति विशेष को लक्षणा कहा जाता है एवं जहाँ लक्ष्यमाण अर्थ गुण अर्थात् साधर्म्य आदि के कारण प्रतीत होता है वहाँ गुणवृत्ति स्वीकार की जाती है।[३१]

अर्थ प्रतीति और अर्थ की ग्राह्यता में अतिशय उत्पन्न करने की दृष्टि से कविगण काव्य वाक्यों (कविता) में बहुधा अलंकारों का प्रयोग करते हैं। ये अलंकार कवि के कथन में सौन्दर्य (चत्कार) तो उत्पन्न करते ही हैं, किन्तु उनकी योजना का मुख्य प्रयोजन सामान्य वाक्यों से प्रतीत न होने वाले अर्थ विशेष की प्रतीति कराना होता है। 'मार्गं मनुष्येश्वर धर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' आदि कालिदास जैसे रससिद्ध कवियों के वचनों में उप्मा आदि अलंकार जिस विशिष्ट अर्थ तक पहुँचा देते हैं, उनके (उपमा आदि अलंकारों के) विना उस अर्थ की प्रतीति सम्भव नहीं है अथवा उसके लिए कवि को सुदीर्घ वाक्य-योजना करनी पड़ती। क्योंकि यहाँ कवि को वह अनुगमन विवक्षित नहीं हैं जैसा अनुगमन 'सीताप्यनुगता रामं शशिनं रोहिणी यथा' में अभीष्ट है। स्मृतियों द्वारा श्रुतिका अनुगमन एक विशिष्ट अनुगमन है जो बात श्रुति में कथित है स्मृतियाँ उसे नहीं कहतीं बल्कि उनमें वह कहा जाता है जो श्रुति में विवक्षित होकर भी अकथित है, अथवा श्रुति से अविरुद्ध हैं, श्रुति की भावना के विपरीत नहीं है। कालिदास जैसे रससिद्ध कवियों की रचनाओं में उपमा आदि अलंकारों का प्रयोग विशिष्ट अर्थ की प्रतीति के लिए ही हुआ है। इसी कारण काव्यशास्त्र के आचार्यों ने अलंकारों को अभिधा अथवा विचित्र अभिधा के रूप में स्वीकार किया है।[३२]

---

३१. अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥—मन्त्रवार्त्तिक, ३५४

३२. (क) अलंकाराणाञ्चाभिधात्वमुपगतं तस्याः भङ्गीभणितिरूपत्वात्।
—व्यक्तिविवेक, पृ० २२

(ख) विचित्रं यत्र वक्रोक्ति वैचित्र्यं जीवितायते।
परिस्फुरति यस्यान्तः सा काप्यतिशयाभिधा॥
—वक्रोक्ति जीवित, १.४२

(ग) सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते।—भामह, काव्यालंकार, २.८५

यह विचित्र अभिधा, अभिधा सामान्य का एक विशिष्ट रूप है जिसके माध्यम से वक्ता का अभिप्राय मनोरम बन कर श्रोता के अन्तस्तल तक पहुँचता है और वहाँ प्रतिष्ठित होता है। इस अभिधा का विस्तार अनन्त है। स्मरणीय है कि महिम भट्ट और मुकुल भट्ट आदि कुछ आचार्य सामान्य अभिधा का ही अनन्त विस्तार स्वीकार करते हैं और समस्त वाग्व्यवहार को अभिधा के वृत्त के अन्दर ही स्वीकार करते हैं। इसी मान्यता को मानस में रखकर मुकुल भट्ट ने लक्षणा का भी अभिधावृत्त के अन्तर्गत ही विवेचन किया है और लक्ष्य अर्थ को **अर्थावसेय** कहा है।[33] महिम भट्ट अभिधा से अतिरिक्त किसी अन्य शब्द व्यापार को मानना उचित नहीं मानते इसकी चर्चा पहले की जा चुकी है। अभिधा वृत्ति को मुख्यवृत्ति और अभिधेयार्थ को मुख्य अर्थ तो सभी आचार्य निर्विवाद रूप से स्वीकार करते हैं। संक्षेप में यह स्वीकार करना अनुचित न होगा कि शब्द ब्रह्म की उपासना अभिधावृत्ति के विना सम्भव नहीं है तथा अभिधा की सहायता से शब्द ब्रह्म में निष्णात होकर परब्रह्म को प्राप्त किया जा सकता है।

---

३३. अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।—अभिधावृत्तमातृका, पृ० ४
यस्य तु शब्द व्यापारावगम्यार्थ पर्यालोचनयावगतिस्तस्य लाक्षणिकत्वम्। .........
सा हि न शब्दव्यापारादवसीयते।···एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण शब्द-
स्याभिधा व्यापारो द्विविधः प्रतिपादितः।—वही, पृ० ५

# लक्षणा-विमर्श

—डॉ० ठाकुर दत्तो जोशी
एम०ए०, पी-एच०डी०, साहित्याचार्य,
उपाचार्यः, संस्कृत-विभागः,
जोधपुर विश्वविद्यालयः, जोधपुरम्

सुविदितमेव संस्कृतकाव्यशास्त्रविकासविदां विदुषां यच्छब्दव्यापारे अर्थस्तु वाच्य-लक्ष्य-व्यङ्ग्यभेदेन त्रिविधो मतः। एषां स्वरूपमपि साहित्यदर्पणकारेण विश्वनाथेन निम्न-प्रकारेण प्रत्यपादि—

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।**
**व्यङ्ग्यो व्यञ्जनया तास्स्युस्तिस्रः शब्दस्य शक्तयः॥**

शब्देषु लक्षणावादस्य चर्चा न केवलं काव्यशास्त्रिभिः कृता, अपितु निरुक्तव्याकरण-न्याय-मीमांसा-वेदान्तादिषु ग्रन्थेष्वपि सर्वत्र लक्षणायाः प्रसारो दृष्टिपथमायाति। अस्या एव-लक्षणायाः शास्त्रनिवहेषु उपचाराऽऽरोपिताक्रिया-गुणवृत्तिमक्त्यारोपादीनि नानानामानि दृष्टिपथमवतरन्ति।

मुख्यार्थसम्बन्धेनामुख्यार्थप्रतिपादकः शब्दव्यापारो लक्षणा इति निगद्यते। मुख्यार्थस्य बाधे जात एव तत्सम्बन्धिनोऽर्थस्य बोधकत्वाल्लक्षणाऽभिधापुच्छभूतेत्यपि कथ्यते। यतोहि मुख्यार्थबाधशायामेव लक्षणायाः प्रसारः।

अभिधापुच्छभूता लक्षणावृत्तिर्न केवलमालङ्कारिकैरेवापितु मीमांसकैर्वैयाकरणै-स्तार्किकैरप्यभिधया वक्तुर्विवक्षितार्थस्य प्रतीत्यभावेऽप्रत्ययनार्थमुररीकृताः लक्षणाशक्तिः, एषा काव्ये अनेकधा प्रसरणशीला भवति। शोभाकरमिश्रस्तु लक्षणां काव्यस्य जीवनं मनुते स्म।

ध्वनिसिद्धान्तस्य विस्तरेण व्याख्यां कुर्वतः आनन्दवर्धनाचार्येण ध्वन्यालोके अभाववादिनां, भक्तिवादिनां, अनिर्वचनीयवादिनाञ्च विप्रपत्तयः समुपस्थापिताः, तत्र भक्तिशब्देन लक्षणा गौणी च उभे एव ग्रहणीये वर्तेते। लक्षणायाः सर्वप्रथमं रूढिः प्रयोजनवती च भेदद्वयमुररीकृतं सुधीभिः, किन्तु केचन आचार्याः विषयेऽस्मिन् नैवैकमत्यं विभ्रति।' कुमारिलभट्टस्यानुसारेण रूढालक्षणा नैव संगच्छते। यतोहि कुमारिलभट्ट मुकुलभट्ट प्रभृतयो विद्वांसो निरूढायाम् अभिधानवद् अर्थसमर्पकतामुररीकुर्वन्ति। तद्यथा—

**निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।**
**क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः॥**

केचन विद्वांस आमनन्ति, यद्बाधस्य स्थितौ रूढा, बाधाऽभावेऽभिधावदर्थप्रदा निरूढालक्षणा भवति। निरूढा, लक्षणारुपेणाङ्गीकार्या न वेति विषये विवादाः सन्त्यनेके।

उपलब्धप्रमाणानुसारेण सर्वप्रथम आचार्यो हेमचन्द्रः काव्यानुशासने रूढा, लक्षणेतिरूपेण नाङ्गीचकार, काव्यप्रकाशस्य प्राचीनौ टीकाकारौ सोमेश्वरमाणिक्यचन्द्राचार्यौ निरूढामभिधावन्मन्वाते । 'निरूढा इति भ्रष्टोपचारप्रतीतयो लक्षणा इति 'लक्षणा' शब्दाः । अभिधानवद् वृक्षादिनामवत्' तयोः कथनमेतदुक्तविचारधारासमर्थनाय अलम् ।

महिमभट्टोऽपि रूढिमूलां लक्षणां नाभ्युपैति । नरेन्द्रप्रभसूरिरपि कथयति—'रूढिलक्षणा त्वभिधातुल्यैव, तेनात्र नोदाह्रियते ।' नागेशोऽपि प्रब्रूते —रूढालक्षणाऽनादिवृद्धव्यवहारमूलकत्वाच्च शक्ति (अभिधा) वदेव ।

अधुना प्रसङ्गोपात्तत्वाद् रूढिलक्षणा विषयको विवादः प्रस्तूयते—मम्मटप्रभृतिभिराचार्यैः प्रयोजनाभावादस्या भेदा नैव कृताः । तद्भेदविषये बद्धादरेषु आचार्येषु विश्वनाथो मूर्धन्यं स्थानं बिभर्ति, यतस्तेनाष्टौ भेदाः कृता रूढिलक्षणायाः । निरूढायामपि प्रयोजनं मन्वानः गोकुलनाथोपाध्यायस्तस्या निरूढाया उपादानलक्षणालक्षणलक्षणेतिमाध्यमेन भेदद्वयमुररीचकार । साहित्यसारकर्ता अच्युतरायोऽपि दीक्षितमतमेवानुसरति । आशाधरभट्टोऽपि जहदजहद्जहद जहदिति माध्यमेन निरूढालक्षणां त्रिधा विभेद । अप्पयदीक्षितोऽपि वृत्तिवार्तिके प्रोक्तवान्—'गौणी शुद्धा चेति लक्षणाया एव द्वैविध्यम् । इयं च द्विविधापि लक्षणा प्रत्येकं द्विविधा—निरूढा फललक्षणा च' इत्युक्त्या निरूढायाभेदं स्वीचकारारूढा लक्षणा सर्वदैव निर्व्यंग्या भवति इत्यामनन्ति केचन आचार्याः। राद्धान्तस्य निराकरणं कुर्वन् गोकुलनाथोपाध्यायो निरूढायां प्रयोजनस्य सत्तां स्वीकुर्वन् निरूढाया उपादानलक्षणालक्षणलक्षणेति भेदद्वयमङ्गीचकार 'भक्ति (लक्षणा) विवेक' नामके ग्रन्थे कथितञ्च तेन—'यत्तु व्यङ्ग्येन रहिता रूढौ' इति काव्यप्रकाशकारवचनं, तत्र रहितेऽर्थेऽनन्तरमपिकारः प्रक्षेप्तव्यो न त्वेवकारः । अर्थात् व्यङ्ग्येन रहिता इति पदस्य पश्चात् 'अपि' शब्दोऽपि संयोजनीय : सर्वदर्शनसंग्रहकारस्य माधवाचार्यस्यानुसारेण रूढिलक्षणायां प्रयोजनस्यापेक्षैव न भवति । अलङ्कारसारकर्ता भावदेवः काव्यप्रकाशटीकाकारो गोविन्दठक्कुरश्च मतमेनमनुसरतः ।

**लक्षणाया प्राचीनता**:—लाक्षणिकशब्दानां प्रयोगस्तु मानवैर्भाषाज्ञानस्य प्रारम्भिकावस्थायामेव विदित आसीत् । भाषाविज्ञानविश्लेषणपरेषु ब्राह्मणग्रन्थेषु भाक्तप्रयोगाणामुल्लेखो यत्रतत्र सम्प्राप्यते,तथापि एतरेयब्राह्मणे भक्तिशब्दस्योल्लेख अस्त्येव यास्कप्रणीतेनिरुक्तेऽपि—'बहुभक्तिवादीनि ब्राह्मणवाक्यानि भवन्ति' इत्युक्तमेव ।

ब्राह्मणग्रन्थेषु तत्तद्गुणानामाधारेण, उपमानस्य उपमेयनाम्ना व्यवहरणमेव भक्तिशब्देन गृह्यते । सैव भक्तिः गौणी वृत्तिर्वा कालान्तरे लक्षणाशब्देन व्यवहृता अभवत् ।

उद्भटाचार्येण गुणवृत्तिर्नामा एका वृत्तिरुल्लिखिता । काव्यालंकारसूत्रे तेन गौणलाक्षणिकार्थौ निरूपितौ। उक्तञ्च तेनयद् सादृश्यनिमित्तेन विहिता लक्षणैव वक्रोक्तिपदवाच्या भवति ।

सुविदितमेव अलंकारशास्त्रविकाशविदां विदुषां यल्लक्षणा रूढिप्रयोजनवती भेदाभ्यां द्विधा प्रयोजनवती लक्षणा च गौणीशुद्धा भेदमाध्यमेन भेदद्वयं बिभर्ति । उपचारस्तत्र कारणम् । तद्यथागौण्यामुपचारः उतवा साधर्म्यं प्राप्यते, किन्तु शुद्धायां तस्य अभाव एव परिलक्ष्यते ।

प्राचीनमीमांसकासास्तदनुयायिनश्च गौणीं लक्षणातश्च भिन्नां वृत्तिं स्वीकुर्वन्तीति तथ्यमे-तदर्वाचीना विद्वांसोऽपि सम्यग्विदांकुर्वन्त्येव[1] आलंकारिकाः सादृश्यमूलकलक्षणां गौणीनाम्ना समुच्चरति, किन्तु मीमांसकाः 'गौणी तु लक्षणातो भिन्ना वृत्तिः इति, आमन्ति। विषयेऽस्मिन् मान्यतैषा प्रसरति तेषां—'यद्गौण्यां शब्दप्रयोगः सम्प्राप्यते। लक्षणायान्तु न। 'गौणे शब्दप्रयोगः न लक्षणायाम्' आद्यस्योदाहरणं 'गौर्वाहीक': 'सिंहोमाणवकः' अपरस्य प्रसिद्धोदा-हरणम्—'गंगायां घोषः'।

मान्यतैषा आलंकारिकैर्नाङ्गीक्रियते, तन्मते हेतुकोट्यां समापतितः शब्दप्रयोगो गौण्या लक्षणायाश्च भेदको नैव भवितुम् अर्हति।

यतो हि आलङ्कारिकैः प्रकारान्तरेण शब्दप्रयोगे सारोपा तदभावे साध्यवसाना भेदद्वयमेव अस्मिन् प्रकरेण स्वीकृतमासीत्।

मीमांसका यां गौणीतिनाम्ना आचचक्षिरे, मीमांसकैरालंकारिकैस्तत्रापि लक्षणा समाम्नाता, मीमांसकेष्वपि प्राभाकरा गौणी पृथग्वृत्तिरूपेणामन्ति। भाट्टमीमांसका लक्षणाया-मेव गौणीमन्तर्भावि उपचारस्य मिश्रणादमिश्रणाच्च लक्षणां गौणीशुद्धाभेदाभ्यां विभज-याञ्चक्रुः।

**गौण्याः प्रसार—**

यास्कसमये (७०० ई० पू०) लक्षणाविषयकतत्त्वानां चर्चा समारब्धासीत्, तथापि स्पष्टरूपेण तस्या पारिभाषिकत्वं उतवा स्वरूपञ्च कुमारिलभट्टात्पूर्वं नैव सम्प्राप्यते। भर्तृहरिणा (५७५-६५१ ई०)गुणवृत्तिविषये अथवा लक्षणाविषये गौणशब्दः व्यवहृतः।[2] कुमारिलभट्टः (६५०-७५० ई०) आद्याचार्य आसीत् येन गौणीवृत्तिर्लक्षणातो भिन्ना स्वीकृता; लक्षणञ्चोभयोः पृथग् पृथग्रूपेण कृतम्।[3]

अनुमीयते यल्लक्षणाया द्वौमुख्यौ भेदौ गौणीशुद्धेति अष्टमशताब्देः पूर्वं नैवास्ताम्। उद्भटाचार्येण लक्षणाशब्दस्य प्रयोगो विहित एव। वामनेन काव्यालंकार सूत्रवृत्तौ कविसन्दर्भ

---

१. गौणी स्वतन्त्रवृत्तिः अभिधातो लक्षणातश्च विलक्षणा इति वेदवादिनां मीमांसकानां सिद्धान्तः। स एव च मधुसूदनसरस्वतीपादेनाङ्गीकृतः।
नरेन्द्रनाथः चौधुरी, काव्यतत्त्वसमीक्षा, मोतीलालबनारसीदासः, दिल्ली १९५९ ई० पृ० ३१८।
तथैव—मीमांसकास्तु गौणीमपि लक्षणातो भिन्नां स्वीकुर्वते, अपरे नैयायिकादयस्तु लक्षणातोऽभिन्नां लक्षणाप्रभेदाख्यां वा मन्यते।
—बदरीनारायणसिंह, शाब्दबोधविमर्शः, गोदोलिया, वाराणसी, सं० २०८० पृ० २६५।

२. सर्वशक्तेषु तस्यैव शब्दस्यानेकधर्मणः।
प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वञ्चोपजायते ।।
भर्तृहरिः वाक्यपदीयम्, मोतीलालबनारसीदासः दिल्ली १९७१ ई० पृ० ९५

३. अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता ।।
—कुमारिलभट्टः, तन्त्रवार्त्तिकम्, चौ० वि० वाराणसी, १९९५ ई० पृ० ३१८

प्रकरणे गौणशब्दस्य तथैव वक्रोक्त्यलङ्कारस्य वर्णनावसरे च लक्षणाशब्दस्य प्रयोगो विहितः।

आनन्दवर्धनाचार्येण गौण्याः कृते गुणवृत्तेस्तथा लक्षणाशब्दस्यापि प्रयोगो विहित एव मीमांसाकौस्तुभकारेण खण्डदेवेन सप्तदशशताब्द्यामभिहितम्, स्वशक्यनिष्ठगुणवत्ता एव गौणी-वृत्तिः अनेन ज्ञायते एतावत्कालपर्यन्तमपि गौणी वृत्तेः पृथग्वृत्तिरूपेण समर्थका आचार्यास्तेषां मान्यता च दृष्टिपथमायाति।

वस्तुतः कुमारिलभट्टसमये या गौणीवृत्तिर्लक्षणातो भिन्ना स्वतंत्ररूपेण च सम्प्रतिष्ठिता आसीत्, सैव मुकुलभट्टस्य अभिधावृत्तिमातृकायां लक्षणाया भेदद्वयान्तर्गत द्वितीयभेदरूपेण अर्थादुपचारस्य भेदद्वयान्तर्गतद्वितीयभेदरूपेण गौणनामतया ख्यातिमाज-गाम।

भट्टस्यानुसारेणोपचारः शुद्धगौणभेदेन द्विविधः, पुनः आरोपाध्यवसानाभ्यां द्विधा विभागमाप्नुतः। एवमुपचारश्चतुर्विध.। इत्थमुपचारसाध्यमेन विभाजिता गौणी, मम्मटेन काव्यप्रकाशे प्रयोजनवती लक्षणावर्णनावसरे लक्षणाङ्गरूपेण तद्भेदरूपेणोपन्यस्ता तथा स्थायि-रूपेण मीमांसकाभिमताया गौण्या वृत्तो समावेशो लक्षणायामेव विहितः।

मम्मटप्रभृत्यालंकारिकाणां समर्थनं धर्मराजाध्वरीन्द्रः, कणादतर्कवागीशः, अन्नम्भट्ट-प्रभृतयो नैयायिका अप्यकार्षुः। वस्तुतः गौणीभिन्नवृत्तिः इत्येषा धारणा अष्टमशताब्दि-पर्यन्तं मीमांसकेषु बद्धमूला आसीत्। अग्रेऽपि मीमांसकानुयायिनः शालिकनाथ-भोजराज-रुय्यक-गागाभट्टप्रभृतयो विद्वांसो मूर्धन्यं स्थानं बिभृति। गागाभट्टो (१७ वीं० श०) गौण्याः पृथगस्तित्वं समर्थयन् प्राह-गौणीभिन्नवृत्तिरूपेणास्वीकुर्वाणे तु 'यजमानः प्रस्तरः' वैदिक-वाक्येऽस्मिल्लक्षणा नैव भविष्यति। यतोऽत्र यजमानप्रस्तरयोर्यागकारतारूपगुणयोगाद् यजमानपदं प्रस्तरे गौणमस्ति, अतः गौणीवृत्तिर्लक्षणातो भिन्ना एव।

**गौण्या पृथक्तायाः समर्थका आचार्या—**

एतेषु समर्थकेषु आचार्येषु मुख्यतया शालिकनाथः, भोजः, हेमचन्द्राचार्यः, मंखकः, गागाभट्टः, भट्टशंकरश्चापि वर्तते। एतेषां मतानि विस्तरभिया नैवोल्लिख्यन्ते।

**गौण्याः पृथगस्तित्वस्य विरोधिनः आचार्या—**

एते आचार्याः 'गौणी न भिन्नवृत्तिः' इति विचारधारायाः पृष्ठपोषकास्सन्ति। एतेषु प्रामुख्यं भजन्ति—अजिसेनः, चण्डीदासः, विश्वनाथः, विद्यानाथः, साहित्यरत्नाकरकारः, धर्मसूरिः, जगदीशतर्कालंकारः, धर्मराजाध्वरीन्द्रः, कणादतर्कवागीशः, अप्ययदीक्षितः, नागेशः, अन्नम्भट्टः, गोकुलनाथोपाध्यायप्रभृतयो विद्वांसः।

साररूपेण वक्तुं पार्यते यन्मीमांसकाः गौणीं लक्षणातो भिन्ना तथातिरिक्तां वृत्ति-मंगीकुर्वन्ति। कुमारिलभट्टादिभिः लक्षणाया गौण्याश्च परिभाषानेकरूपेण विहिताः। अष्टमशताब्दिपर्यन्तं गौण्याः लक्षणायाश्च पूर्णपार्थक्यं दृष्टिपथमवतरति।

**लक्षणाभेदकानि तत्त्वानिः—**

लक्ष्यार्थे तथा लक्षकार्थे मिथोभेदे सति शुद्धा लक्षणा भवति, अभेदे तु गौणी लक्षणा भवतीति राद्धान्तौ मुकुलभट्टस्य, किन्तु तस्य परवर्तिनोऽन्ये मम्मटादय उपचारमेव गौणी-

शुद्धयोर्भेदकतत्त्वं स्वीकुर्वन्ति भट्टः शुद्धोपचारगौणोपचारभेदाभ्यामुपचारस्य द्विधा विभाजनं करोति। तदनुसारेण शुद्धायां गौण्यां चोपचारस्य सम्मिश्रणं सम्प्राप्यते। भट्टः शुद्धोपचार-गौणोपचार भेदाभ्याम् उपचारमिश्रालक्षणां द्विधा विभज्य तयोरपि सारोपासाध्यवसानेति भेदद्वयं व्यधात्।

मम्मटाचार्योऽपि भट्टेन समं शुद्धायाः उपादानलक्षणा, लक्षणलक्षणा च भेदद्वयं व्यधात्, किन्तु गौण्याः शुद्धायाश्च भेदकतत्त्वविषये नैवैकमत्यमुभयो आचार्ययोः।

**मुकुलभट्टमम्मटयोस्ताटस्थ्यसिद्धान्तविषयको मतभेदः**

द्वयोराचार्ययोः मतभेदविषयको मुख्याधारः 'गंगायां घोषः' इति लक्षणापरकं वाक्य-मस्ति यतोऽत्र तटरूपस्यार्थस्य विषये नैवैकमत्यं विभ्रतः, इदन्तु स्पष्टमेव यन्मुख्यार्थबोधजाते सति गंगाशब्दो लक्षणया तटरूपमर्थं व्यनक्ति। विवादस्य कारणमस्ति बाधितगगाशब्दः, 'तटे घोषः' इत्यर्थस्य प्रतीतिं कारयति उत वा गङ्गाशब्दस्यार्थस्य सम्बन्धोऽपि तटेन सह अवि-छिन्नरूपेण विद्यते।

विषयेऽस्मिन् मुकुलभट्टः स्वकीयं मन्तव्यं प्रस्नोति—यद्यप्यत्र गंगाशब्देन तटरूपार्थ एवोपस्थितो भवति, गङ्गया सम्बद्धस्य तटरूपार्थस्योपस्थिति नैव भवति, तथाप्यत्र गंगाशब्द-स्योपयोगिता इदमेव तत्तटं गंगाव्यतिरिक्तानां नदीनां न किंतु गंगानद्या एवेति प्रतीतिः सुस्थिरा भवति।[४]

अस्याभिप्रायोऽयमेव यदुक्तवाक्ये घोषस्याधिकरणरूपं तटं मनसि कृत्वा 'गंगायां घोषः' 'न वितस्तायां नद्याम्' एवंप्रयोगो विधीयते, तदा तटस्य विशिष्टजलप्रवाहेण सह जात उपरागो नैव विधीयते, तदा तटस्य विशिष्टजलप्रवाहेण सह जात उपरागो नैव प्रतीयते, यतो हि तदीयजलप्रवाहविशेषस्तस्य तटस्य प्रतीतिस्तटस्थरूपेण अर्थाद् भिन्नरूपेणैव करोति, अयमेव राद्धान्तो मुकुलभट्टीयताटस्थ्य सिद्धान्तनाम्ना विज्ञायते।[५]

मुकुलभट्टस्य मान्यतामिमां मम्मटो नैवांगीचकार। तेन शुद्धायामुपचारस्य मिश्रणं नैवाङ्गीक्रियते। मम्मटानुसारेण शुद्धायामुपचारस्य राहित्यं भवति, अतोऽत्र सादृश्यविर-हिताया लक्षणायाः प्रयोजकत्वे सति शुद्धालक्षणा भवति, मुकुलभट्टस्ताटस्थ्यमर्थाल्लक्ष्यार्थ-लक्षकार्थयोर्भेदं गौणीशुद्धयोर्भेदकं धर्मं स्वीकरोति।

भट्टस्यानुसारेण गौणीलक्षणास्थले सादृश्याधिक्याल्लक्ष्यलक्षकयोरभेदस्य प्रतीतिर्जायते। यथा गौर्वाहीक इत्यत्र गौणीलक्षणास्थले द्वयोः पदार्थयोऽभेदप्रतीतिः स्पष्टैव, किन्तु शुद्धा-लक्षणायाम् उपादानलक्षणायां लक्षणलक्षणायाञ्च भेदद्वयोऽपि लक्ष्यलक्षकार्थयोर्भेदः सम्प्राप्यते।

गौण्याः शुद्धायाश्च भेदकधर्मरूपेण स्वीकृतस्यभट्टस्वीकृत ताटस्थ्यसिद्धान्त-

४. 'गंगायां घोषः' इत्यत्र घोषाधिकरणभूततटोपलक्षणाभिसन्धानेन 'गंगायां घोषो न वितस्तायामिति गंगाशब्दे प्रयुज्यमाने तटस्थ स्रोतो विशेषणोपलक्षकत्वमात्रोपयुक्त-त्वेन उपरागो न प्रतीयते, तटस्थत्वेन एव तस्य तटस्य प्रत्ययात्।
—मुकुलभट्टः, अभिधावृत्तमातृका चौ०सं०सी० आ० वाराणसी, १९५३ ई० पृ० २०

५. तत्रैव, पृ० २०

स्य मम्मटेन तदनुयायिभिश्च खण्डनमकारि, केचन परवर्तिनः आचार्या तु भट्टस्वीकृत-तात्पर्यसिद्धान्तमसमर्थयन्त उपचारस्य कृतेऽरुचिं प्रदर्शयन्ति, किन्तु बहुमतम् उपचारसमर्थकानाम् आचार्याणामेव दृष्टिपथमायाति ।

**ताटस्थ्यसिद्धान्तसमर्थनपरा आचार्याः—**

महेश्वरन्यायालङ्कारभट्टाचार्यः काव्यप्रकाशस्य स्वकीयायांटीकायां ताटस्थ्यसिद्धान्तं समर्थयन्नाह—घोषपदस्यान्वयसिद्धये गंगापदात्तीरार्थस्य प्रतीतिर्जायते, किन्तु सा गङ्गात्वेन नैव भवति, यदि गङ्गात्वेन प्रतीतिं स्वीकुर्मस्तत्र लक्षणा न भविष्यति । लक्षणायाः सिद्ध्यर्थं गङ्गापदाद्बाधपुरस्सरं तटरूपार्थस्य प्रतीतिरावश्यकी, यदि गङ्गात्वेन तटस्य प्रतीतिर्भवेत् चेत्तत्र घोषान्वयः कथं भविष्यति । गङ्गाप्रवाहेण सममेव प्रवाहावछिन्ने तटेऽपि घोषस्य स्थितिरशक्या, अतो गङ्गातटयोस्ताटस्थ्य भिन्नत्वेन प्रतीतिर्वा समीचीना ।[६]

मम्मटमतं चिखण्डयिषुः काव्यप्रकाशस्य टीकाकारो गोकुलनाथोपाध्यायो भट्ट-प्रवर्तिताध्वानमन्वगच्छत् । अयं महानुभावस्तटे गंगाधर्मस्य शीतत्वपावनत्वादेः प्रतीतिं मनुते, किन्तु तत्र लक्ष्यलक्षकयोर्गङ्गातटयोस्ताटस्थ्यं विभाति इत्यपि स्वीचकार ।[७]

आचार्यविश्वेश्वरोऽपि भट्टाचार्यस्यानुकरणं कुर्वाणोऽलङ्कारकौस्तुभे स्वमतं प्रस्तौति । यथा प्रवाहे घोषस्य निर्मितिरसम्भवा तथैव गङ्गात्वप्रकारेऽपि विज्ञेया ।[८]

**ताटस्थ्यस्य स्थाने उपचारसमर्थका आचार्याः—**

मम्मटो मुकुलभट्टस्य ताटस्थ्यसिद्धान्तं खण्डयन्नाह—

यदि लक्ष्यार्थे लक्षकार्थे च भेदं स्वीकुर्मश्चेदनिष्टापत्तिर्भविष्यति, अर्थात् गंगाया प्रवाहे एवं तटे भेदप्रतीतिरूपताटस्थ्यस्य स्वीकरणे तु शीतत्वपावनत्वाधिक्यस्य प्रतीतिर्न भविष्यति, यल्लक्षणाया वस्तुतो मुख्यं प्रयोजनम् ।

उक्तप्रतीतिस्तु गङ्गाशब्दस्य यो जलप्रवाहरूपो मुख्योऽर्थः तेन सहाभेदप्रतीतावेह भवितुमर्हति । अत एव 'गङ्गायां घोषः, वाक्यमेतद् उपन्यस्यते, अन्यथा गंगातटे घोषः, इति मुख्यशब्दस्य कथने ततो गंगायां घोषः' इति वाधितस्य वाक्यस्य च प्रयोगे को भेदः ।[९]

६. 'गंगायां घोषः' इत्यादौ घोषान्वयार्थं तीरप्रतिपादने स्वार्थस्य गंगायामप्रतिपाद्यत्वात् तद्वाच्यार्थे नैव तत्प्रतिपादनात्। महेश्वरन्यायालंकारः काव्यप्रकाशटीका, शिवनाथगांगुली-पब्लिशिंग हाउस लिमिटेडः, कलकत्ता, १९३७ ई०, पृ० ५२

७. तटादौ गङ्गाधर्मस्य पावनत्वादेरवगम इति प्रक्रिया, सा लक्ष्यलक्षकयोस्ताटस्थ्येन न सम्भवतीति भावः । गोकुलनाथोपाध्यायः काव्यप्रकाशटीका, वाराणसेयसंस्कृतविश्वविद्यालयः वाराणसी, १९६१ ई०, पृ० ६८

८. अत एव गंगायां घोषः इत्यादावपि गङ्गात्वेनैव तटस्य नान्वयो गंगात्वेन प्रकारेण प्रवाहे घोषबाधबुद्धौ तेनैव प्रकारेण तीरेऽपि तदन्वयानुपपत्तेः, न च गंगात्वेन प्रवाहे घोषबाधबुद्धेर्गंगात्वं प्रकारकतीरविशेष्यक बुद्धित्वमिति वाच्यम् । समानप्रकारकात्वेनैव बाधबुद्धीनां प्रतिबन्धकत्वात् ।
—विश्वेश्वरः, अलङ्कारकौस्तुभम् निर्णयसागरमुद्रणालयः, मुम्बई १८९८ ई०, पृ०२१२

९. अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां हि गंगाशब्दः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषत प्रयोजनसम्प्रत्ययः गङ्गाशब्दमात्रप्रतीतौ तु 'गङ्गा तटे घोषः' इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ।
—मम्मटः, काव्यप्रकाशः ज्ञानमण्डललिमिटेडः वाराणसी, १९६० ई० पृ० ६१

गङ्गात्वे तटे च एकत्वस्य प्रतीतिर्निहिता वर्तते, यदि ताटस्थ्यं स्वीकुर्मश्चेत् प्रयोजनस्य प्रतीतिरतिशयरूपेण च भविष्यति। अतो लक्ष्यलक्षकार्थयोरर्थाद् गंगातटयोरभेदमवमत्य तयोः परस्परं भेदं मत्वा ताटस्थ्यसिद्धान्तस्य स्वीकरणं नैव वरम्। यतो तटेन सह गंगायाः सम्बन्धमात्रमेव प्रतीयेत चेत्तर्हि शीतत्वपावनत्वातिशयस्य कृते 'गंगायां घोषः' इति कथने का क्षतिः। सम्बन्धमात्रस्य प्रतीतिस्तु अत्रापि भवत्येव, एवं प्रकारेण मम्मटाचार्येण भट्टसिद्धान्तस्य खण्डनमकारि।

**मम्मटप्रतिपादितोपचारस्य समर्थका आचार्याः—**

काव्यकल्पलतावृत्तिकारोऽमरचन्द्रयतिः, न्यायपरिशुद्धेः रचयिता श्रीनिवासाचार्यः प्रतापरुद्रीयस्य रचयिता विद्यानाथश्च मतमिममनुसरति। काव्यप्रकाशस्य टीकाकारश्चण्डीदासस्य ब्रूते--"तटस्थे लक्षणाशुद्धा" सिद्धान्तोऽयं दूषणपरः।[10] गोपालभट्टोऽपि काव्यप्रकाशस्य टीकायां भेदरूपताटस्थ्यविषये स्ववैमत्यं प्रकटयामास।[11] गोविन्दठक्कुरोऽपि तटरूपार्थस्य प्रतीतिर्गंङ्गात्वेनैव समीचीनं मनुते। तीरत्वादिप्रतीतिर्नाङ्गीकृता तेन, यतोहि तीरेघोषः इति कथनेनापि तत्प्रतीतिर्सम्भवात्।[12] गङ्गा शब्देन जलप्रवाहावच्छिन्नस्य तटस्य प्रतीतिर्निर्वाध रूपेण कथं भवितुमर्हति इति समाधत्ते प्रदीपकारः।[13] वैयाकरणो नागेशो मम्मटमेवानुसरति कथयति च लक्ष्यलक्षकयोरभेदप्रतीतिः शैत्यपावनत्वादि प्रतीतये अङ्गीकरणीया।[14]

**लक्षणाया बीजम्—**

लक्षणाबीजस्वीकर्तॄणामाचार्याणां विविधा वादाः प्रसरन्ति। केचन आचार्या अन्वयानुपपत्तिमेव लक्षणाया बीजं स्वीकुर्वन्ति। अन्ये तात्पर्यान्वयानुपपत्तिमेवावश्यकमङ्गीचक्रुः।

---

१०. 'तटस्थे लक्षणा शुद्धेति' मतं दूषणपरं वा, नत्वन्ययोग व्यवच्छेदपरं मन्तव्यम्।
—चण्डीदासः काव्यप्रकाशटीका, जयकृष्णदासगुप्ता विद्याविलासमुद्रणालयः, वाराणसी, १९३३ ई० पृ० ४९

११. अनयोः······भेदरूपम् अन्योन्याभावस्वभावं ताटस्थ्यलक्षणं माध्यस्थं न विद्यते।
—गोपालभट्टः, काव्यप्रकाशटीका, राजकीयमुद्रणालयाध्यक्षः, १९२५ ई० पृ० ५४-५५

१२. अस्ति हि गङ्गात्वादिपदैस्तीरादिप्रतिपादने गङ्गादिनिष्ठपावनत्वादिरूपप्रतिपिपादयिषत प्रयोजनसम्प्रत्ययः। तत्र गङगात्वादिति प्रतीतिरेव बीजम्, नतु तीरत्वादिप्रतीतिरेव 'तीरेघोषः' इत्यत्रापि तत्प्रतीति प्रसंगात्।
—गोविन्दठक्कुरः काव्यप्रकाशटीका, निर्णयसागरमुद्रणालय, मुम्बई, १९१२ ई० पृ० ३१

१३. कथं गङ्गाशब्दादिभिः गङ्गत्वादिकं तीरे बोध्यते इति चेत्, उच्यते। शब्देन लक्ष्येऽर्थे-प्रतिपादिते तत्र मुख्याभेदो व्यञ्जनया प्रतिपाद्यते। तदेतदुक्तम्—'तटादीनां गङ्गादि-शब्दैः प्रतिपादने तत्त्व प्रतिपत्तौ प्रतिपिपादयिषित—प्रयोजनसम्प्रत्ययः इति
—गोविन्दठक्कुरः, काव्यप्रकाशटीका, पृ० ३१

१४. 'गङ्गायां घोषः' इत्यादौ च गङ्गागत शैत्यादिः प्रतीयते मध्ये तीरादौ गङ्गाभेदप्रतीतिः। नागेशः, वैयाकरणसिद्धान्तलघुमञ्जूषा, चौ०सं०सी०आ०वाराणसी, १९७१ ई० पृ० १०१

अपरे समन्वयवादिनस्तु उभयोरेव स्वीकरणं वरं मेनिरे । चतुर्थकोट्यां वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाया कारणं स्वीकर्तारः चित्सुखाचार्यधर्मसूरिप्रभृतय आचार्या प्रामुख्यं भजन्ते । एते तात्पर्यानुपपत्तेस्स्थाने वाक्यप्रामाण्यानुपपत्तिं स्वीकुर्वन्ति । गोकुलनाथोपाध्यायोनिराकांक्षत्वादीन्यनेकानि कारणानि लक्षणाया व्यावहार । केचनाचार्या वेदे लक्षणायाः निबन्धनं नैव स्वीचक्रिरे । यतोहि तत्र तात्पर्याभावात् स्वाभाविककार्यपरत्वस्यानपलापाच्च लक्षणायाः कृते नावकाशः ।

केषांचिदाचार्याणां कथनमस्ति यद 'गंगायां घोषः' इत्यत्र गंगाप्रवाहे घोषस्यान्वयो नैव संगच्छते, अतोऽत्रान्वयस्यानुपपन्नत्वाद् गंगापदं लक्षणाया तटरूपमर्थं बोधयति । वाक्येऽस्मिन् अभिधया वाच्यार्थेन गंगाप्रवाहेण सह घोषस्यान्वितिर्नैव संगच्छते । एषैवान्वयानुपत्तिरित्याचक्षते । अतोऽत्र मुख्यार्थबाधस्य सत्त्वाल्लक्षणया यदा गंगाशब्दस्तटरूपमर्थं व्यनक्ति, तदैव गंगाशब्दस्य घोषाधिकरणतां सिद्धयति । एवंविधस्थलेष्वेवाचार्यैर्लक्षणाया बीजमन्वयानुपपत्तिरित्यङ्गीकृतम् ।

परवर्तिभिराचार्यैः कथितम् यदि केवलम् अन्वयानुपपत्तिमेव लक्षणाया कारणं स्वीकुर्मश्चेत् 'काकेभ्यो दधि रक्ष्यताम्' इत्यादि स्थलेषु लक्षणा न भविष्यति, यतो ह्यत्र काकेभ्यो दधिरक्षणस्यान्वयो भवत्येव, न वाच्यार्थे बाध इति । इदमप्यत्र ध्येयमस्ति यत्काकपदेन काकसमुदायरूपेऽर्थो नाभिप्रेतः । अत्र वक्तुस्तात्पर्यं सकलदध्युपघातकप्राणिमात्रएव, अतः केवलमन्वयानुपपत्तिमेव लक्षणायां कारणं न वरम् इति तात्पर्यसमर्थकानामाचार्याणां मान्यता विद्यते ।

प्राप्तप्रमाणानुसारेण चन्द्रालोककारः जयदेव एव प्रथमः आलंकारिक आसीत् येन तात्पर्यानुपपत्तिरेव लक्षणाया कारणं बीजं वोररीकुर्वता 'काकेभ्यो दधि रक्ष्यताम्, वाक्येऽस्मिन् अन्वयानुपपत्तेरभावो, 'गंगायां घोषः' इत्यादिस्थलेषु च तात्पर्यानुपपत्तेः सत्ता स्वीकृता । अत्र धर्मराजाध्वरीन्द्रोऽपि जयदेवमनुसरति ।

विश्वनाथन्यायपञ्चाननस्तात्पर्यानुपपत्तेः 'काकेभ्यो दधि रक्ष्यताम्' उदाहरणेन सह एकमन्यमुदाहरणं 'यष्टीः प्रवेशय' इति प्रयच्छन् ब्रूते—यद्यन्वयानुपपत्तिरेव लक्षणाया बीजं स्वीक्रियेत 'चेद्यष्टीः प्रवेशय' इत्यादिस्थलेषु लक्षणा न भविष्यति । यतो हि यष्टिधरेषु प्रवेशान्वयस्यानुपपत्तेरसत्वात् । किन्त्ववक्त्रा भोजनतात्पर्यादेव यष्टयः प्रवेशय इति आज्ञप्ताः । तथैवोक्तोदाहरणेऽपि काकपदस्य सकलदध्युपघातकेऽपि लक्षणास्ति, यतः सर्वेभ्यो दधिरक्षाणं वक्तुस्तात्पर्यम् अतस्तात्पर्यानुपपत्तिरेव लक्षणाया बीजम्[१५] ।

एवं मौनिश्रीकृष्णभट्टः, तथैव जगदीशतर्कालंकारः, अन्नम्भट्टप्रभृतयो नैयायिकाः । काव्यप्रकाशस्य टीकाकारा महेश्वरन्यायालंकाराच्युतरायप्रभृतयो विद्वांसश्च तात्पर्यानुपपत्तिं लक्षणाया बीजं मन्वते ।

---

१५. यद्यन्वयानुपपत्तिर्लक्षणाया बीजं स्यात्तदा 'यष्टीः प्रवेशय' इत्यत्र लक्षणा न स्यात् । यष्टिधरेषु प्रवेशान्वयस्यानुपपत्तेरसम्भवात्, तेन यष्टिधरेषु भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा एवं काकदध्युपघातके लक्षणा सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात् । —न्यायसिद्धान्तमुक्तावली, पृ० २२

अन्येऽपि केचन चित्सुखाचार्यप्रभृतयो मनीषिणो लक्षणाया कारणमन्वयानुपपत्तिमवमत्य वाक्यप्रामाण्यानुपपत्तिमेव लक्षणाया कारणरूपेणोपस्थापयन्ति, तदनुसारेण पदार्थानां पदार्थस्वरूपमात्रपरत्वे या वाक्यप्रामाण्यानुपपत्तिर्भवति सैव लक्षणाया नियामिका। अत एव इदं लक्षणं निर्दुष्टम्। यतो हि लौकिक वैदिकवाक्येषु सर्वत्र लक्षणैषा संघटते।[१६]

वेदेषु अपि 'वायुर्वै क्षेपिष्टा देवता' अर्थाद् वायुरेव शीघ्रगामी देवोऽस्ति, इत्यादिषु स्थलेषु वाच्यार्थान्वयस्य सम्भवेऽपि कैमर्थक्याकांक्षावलेन देवताप्राशस्त्यमाध्यमेन कर्मप्राशस्त्ये लक्षणाऽङ्गीकर्तुं शक्यते, अतो वाक्यप्रामाण्यानुपपत्तिरेष लक्षणायाः क्षेपिकेति निश्चयः।

धर्मसूरिरपि चित्सुखाचार्यस्य समर्थनं करोति। पण्डितराजोऽपि नैयायिकसमर्थितं तात्पर्यानुपपत्तिमेवाङ्गी करोति।

गोकुलनाथोपाध्यायेन भक्ति (लक्षणा) विवेकनामके ग्रन्थे लक्षणाया विविधानि बीजानि विवेचितानि। विस्तरभिया नैवात्र प्रदीयन्ते। काव्यप्रकाशस्य केचन टीकाकारा वैद्यनाथवामनप्रभृतयस्तात्पर्यानुपपत्तेः समर्थका आचार्या विद्यन्ते।

पूर्वोक्तानामाचार्याणां विवादेऽश्रद्दधानाः केशवमिश्र-राजचूडामणिदीक्षित-परमानन्द चक्रवर्तीप्रभृतयो विद्वांसोऽन्वयानुपपत्त्या सह तात्पर्यानुपपत्तिमपि लक्षणायाः कारणमङ्गीकुर्वन्ति।

**लक्षणायाः पदगतत्वं वाक्यगतत्वं वा ?—**

लक्षणा पदगता भवति वाक्यगता वा इति विषये नानाविधावादाः विप्रतिपत्तयश्च दृष्टिपथमायान्ति। मीमांसकधुरीणाः पदे वाक्ये च लक्षणायाः सत्तां स्वीकुर्वन्ति नैयायिका लक्षणाया वाक्यगतत्वं परिहरन्तः पदगतत्वमेव समर्थयन्ति। वेदान्तिनोऽपि नैयायिकवल्लक्षणायाः पदगतत्वं समर्थयन्तो वाक्यगतलक्षणाविषयेऽपि नानुदारा भान्ति, यतस्तन्मतानुसारेण वाक्येऽपि लक्षणा सम्भवा।

स्वकीयां मान्यतां प्रति दृढीयसीमास्थां प्रकटयन्तो नैकभावभाज आलंकारिका अपि द्विधा विभाजिता दृष्टिपथमायान्ति। तद्यथा—शम्भुभट्ट-गागाभट्ट-जगदीशतर्कालंकार-प्रभृतयो विद्वन्मूर्धन्या मीमांसका वाक्यगतलक्षणा समर्थकास्सन्ति। न्यायसिद्धान्तमुक्तावल्यां नैयायिको विश्वनाथपञ्चाननो वाक्यगतलक्षणायाः खण्डनं प्रकुर्वाणो लक्षणायाः पदगतत्वमेव-वाभीष्टं मेने। वेदान्तिनो धर्मराजाध्वरीन्द्रस्यानुसारेण वाक्येऽपि लक्षणा स्वीकरणे न कापि क्षतिः। आलंकारिकेषु मम्मटाप्ययदीक्षित-विश्वेश्वरप्रभृतयो विद्वन्मूर्धन्याः लक्षणायाः पदगततत्वमेवामनन्ति। विश्वनाथानन्तदासनरसिंह प्रभृतयय आचार्या वाक्यगतलक्षणामपि समर्थयन्तो दृष्टिपथमायान्ति, वस्तुतो मम्मटादिभिरस्या भेदा नैव कृताः।

---

१६. तस्मात्पदानां 'पदार्थस्वरूपमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिरेव लक्षणा क्षेपिकेति, तदेव लक्षणं लक्षणायाः............इत्यादावस्ति पदार्थमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिः।

—चित्सुखाचार्यः तत्त्वप्रदीपिका, उदासीन संस्कृत विद्यालयः वाराणसी, १९६६ ई० पृ० २६३।

**गौण्या उपादान लक्षणलक्षणा भेदा—**

प्रयोजनवत्या गौण्या अपि विश्वनाथ-महेश्वरन्यायालंकार-नागेशादिभिरूपादानलक्षणा-लक्षणलक्षणाख्यौ यौ भेदौ कृतौ, तावप्यतिरञ्जितावेव, यतो गौणीलक्षणा तत्रैव भवति यत्र स्वार्थस्य परित्यागो भवति, अत एव गौणीलक्षणा सर्वदा जहत्स्वार्था एव भवति। प्रयोजन-वत्यास्तु अजहत्स्वार्थान्वितत्वस्य प्रश्न एव नैव समुदेति। अर्थात्स्वार्थं नैव विजहाति सा। अस्यां स्थितौ मुख्यार्थोऽपि तत्रैव स्थास्यति, इति तु निश्चप्रचमेव एवं विधेषु स्थलेषु मुख्यार्थेन सह सादृश्यं कथं भविष्यति ? मान्यतैषा प्रसरति, यत्सादृश्यं सर्वदैव भिन्नवस्तुना सह भवति; न स्वकीयेन सह, अतो गौण्याः सारोपा साध्यवसाना भेदांगीकरणे न कापि क्षतिः, यतः सा सर्वदैव जहत्स्वार्थैव भवति। मम्मटप्रभृतयो विद्वांसो मतमेनमंगीकुर्वन्ति। किन्तु जहत्स्वार्था अजहत्स्वार्थारूपेण गौण्या विभाजनं कथं समीचीनताकोटिमाटीकते ?

प्रयोजनवती लक्षणायां प्रयोजनरूपव्यंग्यस्य गूढागूढत्वाच्चमत्कारस्यातिशयत्वान्नयन-त्वाच्च षड्विधा या प्रयोजनवत्याः पुनर्द्विवाविभाजनं समीचीनमेव, आचार्याणां बहुमतमेतद्-विभाजनमेतदंगीकरोति, यद्यपि अस्या अपि धर्मधर्मिगतत्वेन पदवाक्यगतत्वेन च काल्पनिकं विभाजनं भेदोपबृंहणे अवश्यमेव सहायं कर्तुं क्षमं, किन्तु चमत्कारस्याभाव एव तत्र परि-लक्ष्यते। भेदानेतान्स्वीकुर्वाणे त्वानन्त्यदोषःप्रसज्यते, यतो हि आसां जात्यादि भेदेनाप्यसङ्ख्य भेदा गणयितुं शक्याः। तत्राप्येवं चमत्काराऽसम्प्रक्तानां लक्षणाया भेदानां स्वीकरणं वरं नवेति सहृदयजनवेद्यम्।

अष्टमशताब्दिपर्यन्तं लक्षणाया भेदविषयको चर्चा नैव प्राप्यते। मीमांसका यज्ञीय-प्रक्रियासु औपचारिक शब्दानां प्रयोगंकुर्वन्तिस्म। जैमिनिस्तथा गौतमो लाक्षणिकप्रयोगाणां वर्गीकरणमकार्ष्टम्, पतञ्जलिनापि प्रयोजकसम्बन्धानां चर्चा कृता। वामनेन शंकराचार्येण चोपचारायामुख्यशब्दाय वा लक्षणा शब्दस्य।

**लक्षणाभेद विषयेऽपि मतिवैचित्र्यं विदुषाम्—**

इति तु प्रथितमेव सर्वप्रथमं मम्मटेनैव लक्षणाया भेदा व्यवस्थितरूपेण विभाजिताः। तन्मते षड्विधा लक्षणा, प्रयोजनस्य गूढागूढत्वेन द्वादशविधा भवति, एषु द्वादशभेदेषु रूढि-लक्षणायाः समावेशात् सामस्त्येन लक्षणायास्त्रयोदशभेदा जायन्ते।

विवेकदृष्ट्या विलोकयामश्चेदिमे भेदा विद्वद्ग्रन्थेषु विस्तारदृष्ट्या आकुञ्चनदृष्ट्या च निःसीमानं गाहन्ते, यतो रसप्रदीपकर्ता प्रभाकरभट्टस्तथैव यशवन्तयशोभूषणस्यानुवादक आसोपा रामकर्णो लक्षणाया द्वावेव भेदावुररीचक्रतुः।

विस्तारवादे दृष्टिपातं कुर्मश्चेद्विश्वनाथस्य स्थानं मूर्धन्यमस्ति, यतस्तेन लक्षणाया अशीतिभेदा उररीकृताः। उभयत्रापि सीमा अतिग्रसिता वर्तते।

अनेके आचार्या रूढिलक्षणाया अपि भेदान् विवेचयामासुः, तत्रापि विश्वनाथो मूर्धन्यं स्थानं लभते, यतो हि तेन तस्याप्यष्टौ भेदाप्रकल्पिता। द्वितीयं स्थानं रूढेः षड्विधत्वमंगी-कुर्वतः आचार्य जयदेवस्यास्ति।

आचार्याणां बहुमतं रूढिलक्षणायां किमपि व्यंग्यं प्रयोजनं वा न भवतीति विचार-धारायाः समर्थनं विदधाति, यतः सा रूढिमूला, अतो मम्मटप्रभृतिभिराचार्यैः रूढिलक्षणा शुद्धागौणीभेदाभ्यां न विभाजिता, नहि तत्रोपादानलक्षणाया लक्षणलक्षणायाश्च सत्ता तैस्स्वी-

कृता। केचन आचार्यास्तु रूढिलक्षणाया भेदानां विषये बद्धादरास्सन्ति। द्विसंख्यादारभ्य अष्टसंख्यापर्यन्तं भेदास्तस्या प्रकल्पिताः।

लक्षणाया प्रथमो भेदो रूढिस्तस्यापि षड्विधत्वं सर्वप्रथमं जयदेवेन स्वीकृत्य रूढि विस्तारक्षेत्रे नवा दृष्टिः प्रदत्ता, परवर्तिना काव्यप्रकाशस्य टीकाकारेण चण्डीदासेन रूढि-लक्षणायाश्चातुर्विध्यं समर्थितम्। दर्पणकारो विश्वनाथस्तस्याष्टौ भेदान् परिगण्य जयदेव मप्यतिशेते। अप्पयदीक्षितचूड़ामण्यादयो रूढिलक्षणाया द्वैविध्यमेव मेनिरे। गोकुलनाथो-पाध्यायो रूढ्यास्मैविध्यमेव वरं मेने, किन्त्वच्युतरायो गौणी-शुद्धा-विरुद्धा-लक्षितलक्षणेतिरूपेण चतुर्धा विभाजितां लक्षणां पुनः निरूढाप्रयोजनवतीभेदेन द्विधा विभज्य रूढायाश्चातुर्विध्यं स्वीचकार।

प्रयोगो विहितः। वामनोऽमुख्यशब्दं निरूढ-गौण-लाक्षणिक-नामभिस्त्रिधा विभक्तवान्। लाक्षणिकशब्दोऽर्थल्लक्षणा सादृश्यनिबन्धना असादृश्यनिबन्धना इति नाम्ना विभजते, अग्निपुराणकारः सर्वप्रथममौपचारिकीमर्थल्लक्षणां गौणी तथा लाक्षणिकी भेदेन द्विधा विभक्तवान्।

आनन्दवर्धनेनापि उपचारो गुणवृत्तिर्वा, निरूढाप्रयोजनवती भेदाभ्यां द्विधा विभक्ता, प्रयोजनवतीमपि अभेदोपचाररूपेण लक्षणारूपेण च द्विधा विभज्य, लक्षणारूपामपि तां पदगतत्वेन तथा वाक्यगतत्वेन द्विधा विभजते स्म सः।

मुकुलभट्टोऽभिधाया दशभेदानां विवेचनसन्दर्भे षड्विधाया लक्षणाया अन्तर्भावाया-भिधावृत्तिमातृकायां वहूपयतितवान्। भट्टस्य लक्षणाविभाजनसरणिमनुसरता मम्मटेन लक्षणाया यद्वर्गीकरणं कृतं, तदनुसारेण लक्षणा रूढिप्रयोजनमूलकत्वेन द्विधा विभज्यते।

प्रयोजनवत्यपि उपादानलक्षणारोपाध्यवसानाधारेण षड्विधत्वमधिगच्छति परवर्ति-भिराचार्यैर्बहुमतेन एषा विभाजनपद्धतिरनुसृता, अपवादस्वरूपाज्जयदेवाच्युतरायप्रभृतीन् विदुषोविहाय सर्वेऽपि आचार्या मम्मटस्वीकृतलक्षणायाः षड्विधत्वमांशिक परिवर्तनपारवर्ध-नाभ्यां सह स्वीचक्रुः।

मम्मटांगीकृतलक्षणायाः षड्विधत्वविषये प्राचीन टीकाकारो माणिक्यचन्द्रस्तदुत्तर-वर्तिनो गोपालभट्ट विद्याचक्रवर्ती-गोविन्दठक्कुरभीमसेन-वामनझलकीकरप्रभृतय प्रमुख-ष्टीकाकारा अन्ये च नरेन्द्रप्रभसूरि विश्वनाथ देवप्रभृतय आलंकारिका अपि ऐकमत्यं बिभ्रति। शुद्धाया भेदानां विन्यासविषये विसंवादो भवतु नाम, किन्तु षड्विधत्वविषये न विवादः।

अपवाद स्वरूपाः केचनाचार्याः षड्विधाया लक्षणाया समाकुञ्चनं कुर्वन्ति। तन्मध्ये लक्षणा पञ्चविधामता विचारधाराया समर्थको वृत्तिदीपिकाकारो मौनिश्रीकृष्णभट्टः प्रामुख्यं भजते। सामस्यरूपेण भेदद्वयोः पक्षपातिनो भट्टप्रभाकराऽऽसोपारामकर्णौ मुख्यौस्मः।

मम्मटाङ्गीकृतलक्षणाभेदानां परिवर्तनमपि परवर्तिभिर्दार्शनिकैर्विहितम्। आलङ्कारिका अपि एताननुययुः। केचनाचार्या उपादानलक्षणा लक्षणलक्षणा इत्यस्य स्थाने अजहल्लक्षणा जहल्लक्षणा नामकरणं वरं मेनिरे। पण्डितराजाच्युतरायाप्ययदीक्षितादयो विद्वांस आचार्या एवं विधा एव। नञ्जराजयशोभूषणकर्ता नरसिंह एतयोः स्थाने अजहद्वाच्या जहद्वाच्येति नामकरणं व्यदधात्।

प्रकरणेऽस्मिन् एतदपि उल्लेखनीयमस्ति वेदान्तिप्रभावभरितान्तःकरणा आलङ्कारिका

अपि एतयोर्द्वयोः सम्मिश्रणात्मकं प्रयोजनवत्यास्तृतीयमपि भेदं जहदजहल्लक्षणा नाम्ना स्वीचक्रुः, एतेष्वाचार्येषु विद्याधराप्ययदीक्षिताच्युतरायविद्याभूषणादयः प्रामुख्यं भजन्ते। राजचूडामणिस्तु काव्यदर्पणे जहती, अजहती जहदजहतीति नामकरणं वरं मेने।

इति तु निगदित चरमेव यद्रूढालक्षणाया विषये आचार्या नैवैक्यमत्यभाजिनस्तथैव गौण्यारुपादानलक्षणालक्षणलक्षणाभेदविषयेऽपि विवादः प्रचलति, केचनाचार्या गौणीलक्षणायाः प्रोक्तभेदद्वयं कृत्वा सारोपासाध्यवसानाधारेण भेदविस्तारं प्रकुर्वन्तो गौण्या अप्यष्टधा-विभाजनं नानुचितं मन्यन्ते। एवं विधेष्वाचार्येषु चण्डीदास-विश्वनाथ-महेश्वरन्यायालङ्कार-प्रभृतयो विद्वांस आयान्ति।

वैयाकरणो नागेशो यद्यपि गौणी जहत्स्वार्थाऽजहत्वार्था भेदेन द्विधा विभक्तवान्, किन्तु सारोपासाध्यवसानाभेदद्वयम् अजहत्स्वार्थाया एवाङ्गीचकार, न तु जहत्स्वार्थाया यतो हि गौणी सदा जहत्स्वार्था एव भवति।

विद्याधरस्य प्रयोजनवतीलक्षणाया विभाजनसरणिर्भिन्नैव। एकावल्यामयं प्रयोजन-वतीं क्रमशः शुद्धा, सारोपा, साध्यवसानाभेदैस्त्रिधाविभक्तवान्, तदनन्तरं प्रथमं शुद्धां लक्षणां जहल्लक्षणा-अजहल्लक्षणा-जहदजहल्लक्षणा इति रूपेण त्रिधा विभज्य सारोपासाध्यवसानो-ऽपि गौणीशुद्धाभेदमाध्यमेन द्विधा विभक्तवान्।

एवंलक्षणाभेदविषये मतिवैचित्र्यं आचार्याणां स्पष्टमेव। लक्षणाया भेदानां वर्गी-करणप्रसंगे इदमपि ध्यातव्यमस्ति यच्चण्डीदासः 'लक्षणा तेन षड्विधा' इत्यस्याभिप्रायोऽव-गच्छतिरूढिप्रयोजनोपादानाऽऽरोपाध्यवसानरुपायाः षडुपाधेः कारणादेव लक्षणा षट्प्रकारा भवतीति।

अस्या मान्यताया विरोधं गोविन्दठक्कुर-राजानकानन्दप्रभृतयष्टीकाकाराश्चक्रुः, यतो हि एतद्व्यतिरिक्ताः प्रकारा अपि दृष्टिपथमायान्ति। चण्डीदासमान्यतानुसारेण एवं विधेषु स्थानेषु स्थलेषु वा का प्रकारा भविष्यति ? प्रश्नोऽयमसमाधेयः।

अभिधा मुख्यार्थविषयिणी शक्ति या वाच्यार्थबोधायालम्। यदा किमपि पदं मुख्यवृत्या अभिधया वा विवाक्षितार्थस्य बोधाय नालम्, तदान्या वृत्तिः प्रवृत्ता भवति, सा च लक्षणा नाम्ना प्रथितास्ति। अस्यां यत्रतत्र आचार्याणां विप्रतिपत्तयः दृष्टिपथमायान्ति लक्षणाप्रवाहे, तन्मया आचार्यमान्यतानुसारेण स्वमनीषया च यत्किञ्चिद् यथाकथञ्चिद् विद्वन्निवहानां पुरतः समुपस्थापनाय प्रयासो विहितः। इत्यलम्।

# तात्पर्यशक्ति का काव्यार्थ-बोध

—डॉ० जयशङ्कर त्रिपाठी
२६१, बाघम्बरी मार्ग, भारद्वाजपुरम्
इलाहाबाद-६ (उ०प्र०)

वाणी का उच्चारण कैसे होता है तथा पद एवं वाक्य के अर्थबोध की प्रक्रिया क्या है, इन सबका बहुत सूक्ष्म विवेचन हमारे भारतीय शब्दशास्त्रियों ने किया है। महर्षि पतंजलि के शब्दानुशासन (व्याकरण-महाभाष्य) तथा भर्तृहरि के वाक्यपदीय में इस विवेचन की सूक्ष्मता पराकाष्ठा पर पहुँच गयी है, आज के पाश्चात्त्य ज्ञान से प्रभावित भाषा-विज्ञान और अर्थ-विज्ञान ने उसकी सूक्ष्मता और वैज्ञानिकता के आगे अभी अपने चरण नहीं रखे हैं, आगे जो भी हो। हमारे यहाँ अर्थ-बोध की प्रक्रिया पर सूक्ष्म चिन्तन करते हुए भारतीय साहित्य शास्त्रियों ने अपने पूर्ववर्ती शास्त्रकारों से आगे बढ़ने का दावा किया। और जहाँ अर्थ-बोध में अभिधा, लक्षणा तथा तात्पर्यशक्तियों से काम लिया जाता था। उन्होंने नयी शब्दशक्ति व्यंजना (ध्वनि) की प्रतिष्ठा की और कहा कि काव्य का अर्थ विना व्यंजना के जाना नहीं जा सकता, साहित्य के ये शास्त्रकार कश्मीर के रहने वाले थे। ध्वनि या व्यंजना की स्थापना प्रथम आनन्दवर्धन (नवीं शती ई०) ने की, उनके बाद अभिनवगुप्त तथा मम्मट ने उनकी इस स्थापना का अनुमोदन तथा विस्तार ऐसा किया कि अतथ्य या तथ्य जो भी हो, व्यंजना को अच्छे काव्य का पर्याय मान लिया गया, और सभी परवर्ती आचार्यों ने अपने-अपने ढंग से व्यंजना का साधुवाद किया। सुदूर उत्कल के आचार्य विश्वनाथ (१४ वीं शती ई०) ने अपने साहित्यदर्पण ग्रन्थ में व्यंजना की स्थापना में वैसा ही उत्साह दिखाया तथा तर्क प्रस्तुत किये जैसा कि उत्साह तथा तर्क की प्रस्तुतियाँ आचार्य मम्मट (११वीं शती ई०) के काव्य प्रकाश में दीखती हैं। साहित्यदर्पणकार द्वारा व्यंजना का समर्थन तथा विस्तत व्याख्या इसलिए भी अतिशय महत्त्व रखती है, यतः तव तक कुन्तक ने 'वक्रोक्ति जीवित' ग्रन्थ की रचना कर ध्वनि के स्थान पर वक्रोक्ति को काव्य का जीवित प्रतिष्ठापित करने का प्रयत्न किया था। साहित्य के सभी आचार्यों ने अभिधा तथा लक्षणा शब्द शक्तियों को तो निर्विरोध मान्यता प्रदान की है, लेकिन लक्षणा के अनन्तर काव्य का गूढ़ अर्थ या हृदय को छूने वाला भाव जिस शक्ति से प्रकट होता है, बोध की सरणि में आता है उस शक्ति की साहित्य-वैज्ञानिक व्याख्या या मनोवैज्ञानिक व्याख्या में आचार्यों ने अपनी-अपनी दृष्टि से तात्पर्य, ध्वनि (व्यंजना) या वक्रोक्ति का निरूपण किया है।

इसमें व्यंजना शक्ति को कुछ अपने आप ज्यादा लोकप्रियता प्राप्त हो गयी। साहित्य के परवर्ती शास्त्रकारों मे व्यंजना को कवि की लोकोत्तर प्रतिभा या सारस्वत वाणी का ही पर्याय मान लिया जैसा कि आनन्दवर्धन के उद्‌गार हैं—

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥

इसके फलस्वरूप जो भी काव्य में अतिशायी सौन्दर्य दिखाई पड़ा, वह चाहे उक्ति मात्र का हो, अलंकार का हो, प्रबन्ध का हो सब का सब व्यंजना का चमत्कार है—इस मान्यता से अभिभूत हो उठा। लेकिन यह कहना कि सरस्वती केवल उसी व्यंग्य अर्थवस्तु को प्रकट करती है, यह केवल किसी आचार्य की बात है सरस्वती ऐसा नहीं कह रही हैं। तात्पर्य और वक्रोक्ति इन दोनों का व्यंजना से अन्तर इस बात का रहा कि व्यंजना असंलक्ष्यक्रम-शब्दार्थव्युत्पत्ति से ही काव्य के सौन्दर्य बोध को प्रकट कर देने की शब्दशक्ति है किन्तु तात्पर्य और वक्रोक्ति में काव्यार्थ-बोध के लिए क्रमोपलब्ध शब्द-व्युत्पत्ति की प्रक्रिया है। व्यंजना की स्थापना भावनावादी साहित्यशास्त्रकारों ने की है, तात्पर्य शक्ति के प्रतिष्ठाता अर्थव्युत्पत्ति के व्याख्याता मीमांसक हैं और वक्रोक्ति (वक्रता) में अर्थ-बोध का दर्शन करने वाले शब्द की परिस्पन्द-शक्ति के दृष्टा कुन्तक जैसे साहित्य विद्या के गिरि शिखर हैं। यह सामान्य परिचय इस बात के लिए है कि शब्दशक्तियों की कल्पना के इतिहास में तात्पर्य शक्ति का अध्याय कहाँ है। आगे हम इसकी चर्चा विस्तार से कर रहे हैं।

वाक्य के कहने-सुनने के साथ साक्षात् संकेतित अर्थ का बोध अभिधा शक्ति से होता है। अभिधान (कथन) के अनन्तर ही अर्थ का ज्ञान हो जाना अभिधा शक्ति का विषय है।[1] एक बार संकेतित अर्थ का बोध करा देने के पश्चात् सम्पूर्ण बोध (अभिव्यक्ति) कराने में अभिधा समर्थ नहीं होती, एक बार रुक कर फिर उसका क्रियाशील होना असंभव है।[2]

अभिधा शक्ति से संकेतित मुख्य अर्थ का बोध लोक-व्यवहार का ही विषय है, जहाँ काव्यार्थ-बोध की बात आती है वहाँ अभिधा के अनन्तर दूसरी शब्द शक्तियाँ अग्रेसर होती हैं।

जब मुख्य अर्थ के बोध में बाधा उत्पन्न होती है तब रूढ़ि अथवा विशेष प्रयोजन से जिस किसी विशेष अर्थ को जिस अर्थ-बोध-प्रक्रिया से लक्षित किया जाता है उस शब्द शक्ति या उसकी बोध-प्रक्रिया को लक्षणा कहते हैं।[3]

---

१. साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः। —(काव्यप्रकाश)
२. अभिधाव्यापारस्य विरम्य व्यापारासम्भवाभिधानात्।
समयापेक्षयार्थावगमन शक्ति ह्यभिधा। —(लोचन)
३. मुख्यार्थ बाधे तद्योगे रूढितोऽथप्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया॥ (काव्यप्रकाश)
बाधक विधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति।—(लोचन)

जिस प्रयोजन के लिए लक्षणा शक्ति का सहारा लिया जाता है उस प्रयोजन की सिद्धि जिस शब्दशक्ति की प्रक्रिया से सम्भव होती है उसे व्यंजना कहते हैं।[४] ध्वनिवादियों ने इस व्यंजना को महिमा मण्डित करते हुए कहा है—प्रतीयमान (व्यंग्य) अर्थ महाकवियों की वाणी में कुछ दूसरी वस्तु है जो गुण-अलंकार आदि अवयवों से अतिरिक्त युवती के लावण्य के समान चमत्कृत (शोभित) होता है।[५] काव्य का यह ध्वनन-व्यापार अभिधा शक्ति के द्वारा अर्थावगमन के प्रतिभाससे पवित्रित सहृदय की प्रतिभा की अर्थद्योतन शक्ति है।[६] अभिधा और ध्वनि (व्यंजना) शक्तियों के बीच लक्षणा शक्ति की स्थिति हो भी सकती है, नहीं भी होती है। यदि रूढि या प्रयोजनवश वाधा के योग को दूर करने के लिए लक्षणा शक्ति को अवकाश मिलता है तो वह व्यंजना की सिद्धि के लिए ही होता है। लक्षणा कवि की वाणी का अन्तिम अर्थ-बोध प्रकट करने के पहले ही गति-हीन (प्रक्रिया से बाहर) हो जाती है।[७]

अभिधा, लक्षणा और व्यंजना शब्दशक्तियों से प्रकट होने वाले अर्थों को क्रमशः वाच्य, लक्ष्य और व्यंग्य कहा जाता है। इनमें व्यंग्य अर्थ ही काव्य को जीवन्त बनाता है, यह बात कश्मीरी साहित्यशास्त्रकारों की अपनी मान्यता है।

कश्मीरी विद्वानों ने जब तक व्यंजना की स्थापना नहीं की थी इसके पूर्व काव्य के सहृदयश्लाघ्य अर्थ-बोध को तात्पर्य द्वारा ही जानते थे। काव्य के गूढ अर्थों को तात्पर्यमुद्रा[८] की प्रक्रिया से भावक[९] प्रकट करते थे। तात्पर्यमुद्रा का अर्थ तात्पर्य शक्ति है। व्यंजना की

---

४. यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।। —(काव्यप्रकाश)

५. प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।। —(ध्वन्यालोक)

६. अर्थावगममूलजाततत्प्रतिभासपवित्रित प्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्ध्वननव्यापारः।
—(लोचन)

७. न लक्षणात्मा उक्तादेव हेतोः स्खलितगतित्वाभावात्। तत्रापि हि स्खलितगतित्वे पुनर्मुख्यार्थबाधानिमित्तं प्रयोजनमित्यनवस्था स्यात्। —(लोचन)

८. तत्त्वाभिनिवेशी (भावकः) तु मध्ये सहस्रं यद्येकस्तदुक्तम्—
शब्दानां विविनक्ति गुम्फनविधीनामोदते सूक्तिभिः
सान्द्रं लेढि रसामृतं विचिनुते तात्पर्यमुद्रां च यः।
पुण्यैः संघटते विवेक्तृविरहादन्तर्मुखं ताम्यतां
केषामेव कदाचिदेव सुधियां काव्यश्रमज्ञो जनः ।।
—(काव्यमीमांसा, अध्याय ४)

९. काव्येन किं कवेस्तस्य तन्मनोमात्रवृत्तिना।
नीयन्ते भावकैर्यस्य न निबन्धा दिशो दश ।।—(काव्य मीमांसा, अध्याय ४)

स्थापना के बाद भावक[10] को सहृदय[11] कहा जाने लगा।

व्यंजना की स्थापना के बाद भी काव्य की अर्थ-बोध-प्रक्रिया में तात्पर्यशक्ति का वर्चस्व वर्तमान रहा है, इसका आभास व्यंजनावादियों द्वारा बार-बार तात्पर्यशक्ति का खंडन किये जाने से होता है। यही नहीं मम्मट ने शब्दशक्तियों के विवेचन में तात्पर्यशक्ति का अस्तित्व अलग से बनाये रखा—

तात्पर्यार्थोऽपि केषुचित् ।। आकांक्षायोग्यता सन्निधिवशाद् लक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् ।। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।।

—(काव्यप्रकाश द्वितीय उल्लास, सूत्र ७)

मम्मट का यह उल्लेख तात्पर्यशक्ति की परिभाषा भी है। आचार्य का कहना है कि कुछ मनीषियों के मत में तात्पर्य भी एक शब्दशक्ति है, और तात्पर्यार्थ भी वाक्य का कोई अर्थ होता है (अथवा काव्य का अर्थ होता है)। तात्पर्य शक्ति की व्याख्या इस प्रकार से है—किसी वाक्य का उच्चारण होने पर वाक्य में प्रयुक्त (जाति, गुण, क्रिया, द्रव्य) पदार्थों का अन्वय किये जाने से उन पदार्थों से भिन्न जो वाक्यार्थ प्रकट होता है (शोभित होता है) वह तात्पयार्थ है। सूत्र में 'केषुचित्' कहा है उसका अर्थ है केषांचित् मीमांसकानाम्। अर्थात् यह मीमांसकों का मत है। मीमांसकों में वाक्य की अर्थ-व्युत्पत्ति-प्रक्रिया पर दो मत हैं। पहला मत अभिहितान्वय सिद्धान्त मानने वालों का है जिनके मत में वाक्य के भिन्न भिन्न पदार्थों का अन्वय हो जाने पर वाक्यार्थ प्रकट होता है। दूसरा मत उनका है जो अन्विताभिधान मानते हैं, उनके मत में वाच्य कहे जाने पर पदार्थ स्वयं अन्वित होकर ही प्रकट होते हैं इस प्रकार समन्वित पदार्थ (वाच्य) ही वाक्यार्थ होता है। पहला मत मीमांसकों का बहुमान्य पक्ष है। दूसरा मत कुमारिल भट्ट के शिष्य प्रभाकर भट्ट (गुरू) और उनके अनुयायियों का है। दूसरे के मतानुसार जहां अखण्ड वाक्य ही अन्वित पदार्थ के रूप में वाक्यार्थ-बोध करा देता है, अर्थ-बोध की यह प्रक्रिया बाण की नोक के समान बढ़ती और प्रबलतर होती जाती है, यह प्रक्रिया 'इषोरिव दीर्घदीर्घतरो व्यापारः' है और बिना अन्तिम बोध के इस प्रक्रिया का विराम नहीं होता। इनके मत में 'यत्परः शब्दः स शब्दार्थः' की मान्यता है अर्थात् शब्द जिस अर्थ को लक्ष्य कर प्रयुक्त हुआ है वही उसका शब्दार्थ है, तथा अन्वित पदों का वाक्य उस अर्थ का बोध कराकर ही विराम लेगा उसके पूर्व नहीं। इसमें व्यंजना-

---

१०. सन्ति पुस्तक विन्यस्ताः काव्यबन्धा गृहे-गृहे ।
द्वित्रास्तु भावकमनः शिलापट्टनिकुट्टिताः ।। (काव्यमीमांसा, अध्याय ४)

११. (क) काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः......
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम् ।। – (ध्वन्यालोक, १।१)

(ख) सहृदय हृदयाह्लादि शब्दार्थमयत्वमेव काव्य लक्षणम् ।—(ध्वन्यालोक, १।१)

(ग) काव्यस्य हि ललितोचितसन्निवेशचारुणः......
सहृदयश्लाघ्यो योऽर्थः ।। —(ध्वन्यालोक १।२)

व्यापार की आवश्यकता नहीं होगी, तात्पर्यशक्ति उसका बोध कराकर ही अपनी परिणति प्राप्त करती है ।

प्रभाकर (गुरु मत) का यह सिद्धान्त—'यत्परः-शब्दः स शब्दार्थः', तात्पर्य की उक्त वितत शक्ति के रूप में आनन्दवर्धन और कुन्तक की काव्य-रचना-प्रक्रिया के ही समानान्तर है या इन आचार्यों का सिद्धान्त गुरुमत के उक्त वाक्य का पर्याय है । आनन्द-वर्धन कहते हैं—

**सोऽर्थस्तद्व्यक्ति सामर्थ्ययोगी शब्दश्च कश्चन ।**

**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥** —(ध्वन्यालोक, १/८)

वह व्यंग्य अर्थ और उसके बोध की सामर्थ्य का संयोगी शब्द-ये दोनों ही विरल होते हैं, कोई-कोई होते हैं, ऐसे शब्द-अर्थ का प्रयोग महाकवि की प्रतिभा का प्रमाण है । उनको यत्न-पूर्वक ही जाना जा सकता है ।

इसी से मिलती-जुलती घोषणा आचार्य कुन्तक की है—

**शब्दो विवक्षितार्थैक वाचकोऽन्येषु सत्स्वपि ।**

**अर्थः सहृदयाह्लादकारि स्वस्पन्द सुन्दरः ॥**—(वक्रोक्तिजीवित, १/९)

अर्थात् इस काव्य-मार्ग में (काल की रचना प्रक्रिया में) अन्य शब्दों के रहते हुए भी विवक्षित अथ का वाचक कोई (अकेला) एक शब्द ही होता है और सहृदों को आनन्दित करने वाला अपने स्पन्द से सुन्दर अर्थ ही काव्य का अर्थ होता है ।

उक्त दोनों आचार्यों के मत में काव्य की रचना में सहृदयाह्लाद अर्थ विरल ही होता है और उसे प्रकट करने वाला उसका वाचक शब्द कई पर्यायों के रहते हुए भी कोई एक होता है । उसके प्रयोग में कवि की प्रतिभा प्रमाण है ।

गुरुमत में तात्पर्यशक्ति का लक्षण 'तत्परः शब्दः स शब्दार्थः' भी तो यही बात कहता है । अर्थात् शब्द जिस अर्थ के लिए प्रयुक्त हुआ है वही उसका शब्दार्थ है, उस अर्थ का बोध कराये बिना शब्द की बोध-प्रक्रिया विराम क्यों ग्रहण करेगी, वह प्रक्रिया (व्यापार) चाहे बाण की नोक की तरह दीर्घदीर्घतर हो अथवा दीपक के प्रकाश की तरह सहसा (श्रवण के अनन्तर ही) प्रस्फुटित हो जाने वाला हो । इस विषय में अभिनव गुप्त ने जो आपत्तियाँ प्रकट की हैं, वे केवल शास्त्रीय हैं। वे कहते हैं कि यह बात कैसे मानी जा सकती है कि तात्पर्यशक्ति बाण की तरह अधिक से अधिक कार्य की प्रक्रिया है, उस तरह जैसे बलवान् द्वारा प्रयुक्त बाण शत्रु के कवच और उसके मर्म स्थान को भी विदीर्ण कर देता है । यदि यह ऐसा होगा तो क्या एककार्य होगा, एक हो नहीं सकता, विषय, सहकारी भेद (संकेत ग्रहण, शक्यार्थबोध, वक्तृवैशिष्ट्य) से अनेक होगा और असजातीय होगा । ऐसा होने पर एक ही शब्द-व्यापार से यह अर्थ-बोध नहीं होगा । तथा यदि सजातीय मानते हैं तो पदार्थ के विवेचकों ने सजातीय कार्य में शब्द, कर्म, बुद्धि का रुक रुक कर व्यापार(कार्य-रत होना) अस्वीकार कर दिया है ।[१२]

---

१२. अथानेकोऽसौ तद्विषयसहकारि भेदादसजातीय एव मुक्तः । सजातीये च कार्ये विरम्य-व्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिः निषिद्धः । असजातीये चास्मन्नय एव ।
—(ध्वन्यालोक, ३।४ का लोचन)

अभिनव गुप्त ने यहाँ पर 'सजातीये च कार्ये विरम्य-व्यापारः शब्द कर्म बुद्ध्या-दीनां पदार्थविद्भिः निषिद्धः।' यह कह कर अपनी व्याख्या को कवि की रचना-प्रक्रिया से अलग कर लिया है और शब्द के अर्थ-बोध की प्रक्रिया से भी, यतः यहाँ उन्होंने मन का नाम नहीं लिया है। मन कवि के काव्य का तो मूल कारण है ही, वही संस्कारों का जन्म दाता है, वाणी के जन्म का कारण भी मन ही है और मन का विरम्य व्यापार निषिद्ध नहीं है, यह न्यायदर्शन से स्पष्ट है। मनोव्यापार (चित्तवृत्ति) को आनन्दवर्धन ने भी कवि की काव्यसृष्टि का कारण माना है।[13]

अभिज्ञान शाकुन्तल के पाँचवे अंक के आरम्भ में राजा दुष्यन्त तो अपने राजभवन में है और उसका मन और कहीं कार्यरत तथा उसके साथ भी है, इसीलिए वह सुखी भी है दुःखी भी है। और दुःख के कारण को समझ नहीं पा रहा है—

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तर सौहृदानि॥**

—(अभि० शाकु० ५/२)

'पाणिनीय शिक्षा' के अनुसार वाणी के जन्म के आरम्भ की प्रक्रिया मन के धरातल से ही घटित होती है—

**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।**
**मारुतस्तूरसि चरन् मन्दं जनयति स्वरम्॥**—(पाणिनीय शिक्षा ६-७)

(आत्मा या बुद्धि) मन को बोलने के लिए नियुक्त करती है, तब मन शरीर की अग्नि पर जोर डालता है, अग्नि वायु को प्रेरित करता है और वायु हृदय में चक्कर काटते हुए स्वर को जन्म देता है जो बाहर आकाश में स्फुट ध्वनि में सुनायी पड़ता है।) इसलिए वाणी और शब्द के अर्थ-बोध की प्रक्रिया में मन की उपेक्षा नहीं की जा सकती। आचार्य अभिनव गुप्त तात्पर्य शक्ति के निराकरण में शब्द कर्म बुद्धि के विरम्य व्यापार निषेध का सिद्धान्त अपनाते हैं यह तो ठीक है, लेकिन इससे तात्पर्यशक्ति की वितत प्रक्रिया में कोई बाधा नहीं आती, क्योंकि यह मन का अबोधपूर्व (अन्तर्मन का) व्यापार है जो सही लक्ष्य पर पहुँच कर शान्ति या आनन्द में मग्न हो कर विश्राम ग्रहण करता है।

यहाँ तक अन्विताभिधानवादी के तात्पर्य शक्ति का यह संक्षिप्त व्याख्यान है। जिनके अनुसार अपने-आप अन्वित पदार्थ वाक्य का स्वरूप ग्रहण कर अर्थ-बोध प्रस्तुत कर देते हैं।

वाक्यपदीय में वैयाकरण ने भी वाक्य के अर्थ-बोध में कुछ ऐसी ही प्रक्रिया की मान्यता की है। वे अखंड पदवाक्य को नाद (व्यंजक) तथा अर्थ को व्यंग्य (स्फोटक) स्वीकार करते हैं—

१३. चित्तवृत्ति विशेषा हि रसादयः। न च तदस्ति वस्तु किंचिद्यन्न चित्तवृत्ति विशेष-मुपजनयति तदनुत्पादने वा कवि विषयतैव तस्य न स्यात्।

—(ध्वन्यालोक उद्योत ३।४३)

**ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।**
**व्यंग्य व्यंजकभावेन तथैव स्फोटनादयोः ॥ —(वाक्यपदीय १।९७)**

इस प्रकार अन्विताभिधानवादी की तात्पर्य शक्ति, वाक्यपदीय का नाद-स्फोट सिद्धान्त तथा अभिनव गुप्त का ध्वनन द्योतन व्यंजन प्रत्यायनावगमनादि व्यंजना व्यापार एक ही सरणि पर स्थित हैं। और अधिक स्पष्ट करना चाहें तो यह कहेंगे कि एक ही बोध-शिखर की ऐसी चमक है जो दृष्टिभेद से भिन्न-भिन्न हो जाती है, अथवा अन्तर्मन से उठने वाली ऐसी बोध-लहर है जिसे प्रत्येक पंडित अपने मन के तादात्म्य के अनुसार अपने-अपने नूतन-बोध से आस्वादित करना चाहेगा। काव्य की रचना और उसके अर्थ-बोध का धरातल प्रत्येक कार्य का अपना होता है। प्रत्येक कार्य की यह नवीनता न हो तो काव्य रचना की पुनरावृत्ति होने लगेगी। केवल कथा दूसरी हो जाने से काव्य नया नहीं हो जाता, कवि के शब्द-अर्थ प्रयोग का वैशिष्टय जो प्रत्येक कवि का अपना होता है, पूर्व की अपेक्षा उसके काव्य की नूतनता का कारण बनता है। तात्पर्यशक्ति और व्यंजनाव्यापार यह सब काव्य के अर्थ-बोध का स्थूल विभाजन है, अर्थ-बोध की सूक्ष्म प्रक्रिया में इन दोनों के संगम से नयी बोध-शक्ति का उदय हो जाता है। जिसमें व्यंजना-व्यापार तो विलुप्त हो सकता है लेकिन तत्परक शब्द और तात्पर्य अर्थ की प्रक्रिया तरंगित होती रहती है। प्रत्येक कवि का अर्थ बोध और उसकी शब्दशक्ति सूक्ष्म रूप से उस कार्य की अपनी सृष्टि है, इसलिए साहित्यविद्या का पंडित इनका इदमित्थं व्याख्यान नहीं कर सकता। प्रवेश-कक्षा के छात्रों को समझाने के लिए कोई भी बात कही जा सकती है। आचार्य दण्डी (चौथी शती ई०) ने भी इसी तथ्य की सृष्टि प्रकारान्तर से की है, वे कहते हैं कि कवियों के वैदर्भ और गौड मार्ग का भेद बहुत स्पष्ट है, उनके स्वरूप भिन्न हैं, लेकिन उनके भेद जो प्रत्येक कवि में स्थित हैं, उनके अपने हैं, उनको नहीं कहा जा सकता—

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः ॥

—(काव्यादर्श १।१०१)

यतः—

इक्षु क्षीर गुणादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥

—(काव्यादर्श १।१०२)

ईख, दूध और गुड सभी मीठे होते हैं लेकिन इनकी मिठास में महान् अन्तर है, मिठास की इस भिन्नता को सरस्वती द्वारा भी वर्णन नहीं किया जा सकता।

अतः मिठास और अर्थ-बोध का चमत्कार सब के अपने-अपने हैं यही उनकी नूतनता है। उनको सिद्धान्त की बद्ध रेखा में जानने का प्रयत्न करना उनके नूतनत्व का तिरस्कार है।

अब हम अभिहितान्वय तात्पर्यशक्ति की अर्थ-बोध-प्रक्रिया से भी संक्षिप्त परिचय प्राप्त करें। तात्पर्यशक्ति के स्वरूप के सम्बन्ध में मीमांसकों की यह प्रथम और मूल धारणा है। वाक्य का अन्वय जान कर अर्थ-बोध की प्रक्रिया की ओर अग्रसर होना—अर्थ को जानने

पूर्वोक्तेषु रतिभेदेषु वत्सलतारतेर्महत्ता दशमशताब्द्याः प्रागेव रससिद्धान्तस्य पुनश्चिन्तनेन साकं साहित्यशास्त्रिभिः स्वीकृता। तस्या वत्सलतायाः परिपाकेन जायमानं वात्सल्यं दशमो रस इति ख्यातिं गतः उक्तञ्च महाराजभोजेन—

शृंगारवीरकरुणाद्भुतरौद्रहास्य वीभत्सवत्सलभयानकशान्तनाम्नः।
आम्नासिषुर्दशरसान् सुधियः··· ··· ··· ···॥[1]

चतुर्दशशताब्दी यावद् रसास्यास्य स्फुटं चमत्कारिता सुप्रसिद्धा जाता—

स्फुटं चमत्कारितया वत्सलं च रसं विदुः।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम्॥
उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम्॥
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्तिताः।
संचारिणोऽनिष्टशंकाहर्षगर्वादयो मताः।
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः॥[2]

वत्सलतायां कास्ति विलक्षणता यतो रतेर्भिन्ना सा विद्यत इति चेत् प्रश्नस्येदमुत्तरम्-कान्तकान्तारतिस्तूभयनिष्ठा परं वत्सलता तु न सर्वदोभयनिष्ठा प्रत्युतैकनिष्ठापि सदैवानन्दप्रदा। अबोधो मुग्धश्च शिशुरात्मानं प्रति वत्सलतां तु प्रत्यभिजानाति परं स्नेहं दर्शयितुं न विजानाति। तस्यावयवेषु सहजसौष्ठवं, मुक्ताफलेषु तरलत्वमिवाङ्गेषु व्याप्तं लावण्यं, मनसो निर्विकारत्वं निश्छलत्वं वा[3] वाग्वेषव्यवहाराणां लालित्यं च बलादावर्जयन्ति वत्सलानां हृदयानि।[4] सत्यं शिवं सुन्दरञ्च यदि ब्रह्म वेविद्यते, शिशुरप्यस्ति मूर्तिमत् सत्यं घनीभूतं सौन्दर्यं व्यष्टेः समष्टेश्च मंगलायतनम्। अत एवोच्यतेऽसावीश्वररूप इति।[5] लोके वत्सलतारतिः पशु-

---

१. शृंगारप्रकाशः १/६

२. साहित्यदर्पणः, ३/२५१-५४

३. निश्छले शिशुवर्गेऽस्मिन्नात्मभावः परो मतः।
वत्सलताऽत उद्भुता वात्सल्यं च प्रतीयते॥
लोके समन्वयोऽनेन परिवारस्य चोद्भवः।
हृदयस्यात्र विश्रामस्तत्त्वमिदं न वार्यते॥
— रसालोचनम् : डॉ० ब्रह्मानन्दः शर्मा, ४/३९-४०

४. (i) नन्दनस्य शुचिभा शिशुवदने॥—सिद्धार्थचरितम्: वीरेन्द्रभट्टाचार्यः, ३/६९
(ii) गृहेजानुचरः केल्यां मुग्धस्मितामुखाम्वुजः।
पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः॥—सुभाषितरत्नाकरः, पुत्रप्रशंसा, १
(iii) न चन्द्रश्चन्द्रमाः पुत्रं चन्द्रमाहुर्मनीषिणः।
इष्टे स्पृष्टे श्रुते चोक्ते घ्राते यत्रेन्द्रियोत्सवः॥—हरिहरसुभाषितम् २/३७

५. सकलजनान्तःकरणाकर्षित्वं हि भगवतोऽसाधारणं लिंगम् आनन्दमयत्वात्···एतावत्त्वं हि परमेश्वरं लिंगमस्य, यद्वाल एव सकलजनचित्तचमत्कारकारकः।
—चैतन्यचन्द्रोदयम्, १/पृ० २४

पक्षिमनुष्येषु सर्वेष्वाबालवृद्धेषु व्यापकत्वेन दरीदृश्यते। न केवलमात्मनां बालकेषु, न केवलं मनुष्यस्य मनुष्यबालकेषु, प्रत्युत मनुष्यस्य मनुष्येतरशिशुष्वपि, सकलप्राणिनां निजापत्येषु च वत्सलता वरीवृत्यते। यथा च लिखितं मयैवान्यस्मिन्नेकस्मिल्लेखे—"प्रत्यासन्ने वर्षासमये सुरक्षितस्थानं प्रति निजाण्डान् नयन्तीषु पिपीलिकासु, शावकेभ्यो नीडनिर्माणं कुर्वत्सु अन्नकणांश्च तच्चञ्चुपुटेषु निदधत्सु पक्षिषु, वत्सानवलोक्य मुहुर्मुहुरातुरतया हुम्बारवमुद्गिरन्तीषु समुपसृज्य लिहन्तीषु प्रस्नुतपयोधरासु च सुरभिषु, नैकान् मासान् मृतवत्सं वक्षसि श्लिष्यन्तीषु वानरीषु, सावधानतयाक्लेशेनारुजा निजान् गर्भजान् मुखैर्गृहीत्वा स्थानपरिवर्तनं कुर्वाणासु व्याघ्रीषु बिडालीषु चायंभावः सन्ततं साक्षात्क्रियते।"[1]

लोकेऽपि भावस्यास्यानन्ददायिता सुसिद्धेव। प्रधने हन्यमानं पुत्रं दनुं रक्षन्ती वृत्रमाता सहर्षमिन्द्रस्य वज्रेण मृत्युं वृतवती।[2] श्रवणकुमारस्य मृत्यौ पितृभ्यामाचरितोऽग्निप्रवेशः, पुत्रवियोगात्तेजस्विना राज्ञा दशरथेन कृतः प्राणपरित्यागः, पुत्रवधस्य मिथ्योदन्तादेव स्तब्धेन द्रोणेन विहितः समरे शस्त्रास्त्रपरित्यागः, हुँमायोः स्वास्थ्यलाभाय मोगलराज्ञा बाबरेण सानन्दं कृतात्मनो मरणयाच्ञा च प्रकामं सन्ति निदर्शनानि वत्सलताया व्यापकत्वस्य। अतोऽस्य भावस्य सहजसिद्धा सकलप्राणिसुलभता। यं कमपि शिशुं दर्शं दर्शं वत्सला लोका विगलितवेद्यान्तरान्तः करणा जायन्ते। शिशुमुत्सङ्गे वोढुमुत्सुकास्ते "धन्यास्तदङ्गरजसा मलिनी भवन्ति"[3] इत्युद्गिरन्ति। कवयोऽपि मन्यन्ते यन्मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः।[4] पित्रो कृते तु पुत्रोऽयमानन्दग्रन्थिरेवास्ति।[5] अतो लोक एव यदास्य भावस्यैतावती तीव्रतानुभूयते, काव्ये तु कलायोगादसावुत्कृष्टतरो तीव्रतरो वा भवति। काव्ये नाट्ये च वत्सलतानुभूतौ सद्यः साधारणीकरणं जायते परमानन्दश्चास्वाद्यते।

अयं वत्सलताभावो मनोवैज्ञानिकेषु मातृवृत्तिरूपेण (Maternal Instinct)[6] काव्यशास्त्रिषु च पुत्ररति-स्नेह-वत्सलतादिनामभिः स्थायिभावरूपेण जन्मजातसंस्कारः स्वी-

---

१. "स्थायिभावस्वरूपं वत्सलताभावस्थायित्वञ्च"
—स्वरमंगला, त्रैमासिकी, वर्षम्, ६ अंक २, पृ० १९

२. नीचावया अभवद् वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः॥—ऋग्वेदः, १/३२/९

३. अभिज्ञाशशाकुन्तलम् ७/१७

४. महावीरचरितम्, भवभूतिः, ३/पृ० २७९

५. अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते॥—उत्तररामचरितम्, ३/१७

6. That, if the animal-mother is moved by the impulse of a maternal Instinct, so also is the Woman. To repudiate this view as baseless would seem to me the hieght of blindness and folly..
—An outline of Psychology, p. 136.

क्रियते । बाल्यकालादेवाभिव्यक्तिर्जायते वासनात्मतया विद्यमानस्यास्य भावस्य । शिशूनां पुत्तलिकाक्रीडास्य प्रमाणम्, यथोक्तं महाकविना कालिदासेन—

**मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।**
**रेसे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ।।**[1]

वत्सलतासंज्ञकस्य स्थायिभावस्य नैके विभावा विद्यन्ते । परिवारे पुत्रीपुत्रपौत्रीपौत्रदौहित्रभ्रातृजाभ्रातृजानुजानुजभागिनेयीभागिनेयाद्याः, समाजे च शिष्याः शिशवश्च मुख्यतोवत्सलताया आलम्बनविभावाः सन्ति । समाजे केचनान्यसम्बन्धेष्वपि वत्सलताभावः क्वचिद् दृश्यते । यथा—स्वामिनः सेवकं प्रति, भक्तस्य भगवद्बालरूपं प्रति, भगवतो भक्तं प्रति, गृहस्थस्य गृहपशून् गृहपक्षिणश्च प्रति, कृतकतनयत्वेन गृहीतान् लतातरूंश्चापि प्रति । सर्वेष्वेषु विभावेषु सामान्यतः पुत्रपुत्रीशिष्यकमनीयशिशवश्च वत्सलतोद्बोधका विभावाः सन्ति अनुभावा संक्षेपतो द्विविधा उक्ताः-कायिका वाचिकाश्चेति।[2] शिशुं प्रति निर्निमेषचक्षुषावलोकनं, तस्य शिरोघ्राणं, चुम्बनं, चुचुत्करणमुत्सङ्गधारणं, स्पर्शनालिंगनादीनि च सामान्याः कायिकानुभावा भवन्ति । शिशुना सह क्रीडनम्, शिशोरलंकरणम्, गोपुच्छादिभिः रक्षाकरणं, मृदुताडनमित्यादीनि च विशिष्टाः कायिकानुभावा वर्तन्ते । आशीर्वचनमुपदेशः शिशोः रक्षार्थं प्रभुप्रार्थना, मन्त्रजपः, कदाचित् कृत्रिमतर्जनमपि च वाचिकानुभावाः भवन्ति । सात्त्विकभावानामष्टविधत्वं काव्यशास्त्रिभिर्यद्यपि स्वीकृतम् परमेतेभ्यो भिन्नोऽपि नवमो भावो बहुलतया स्तनधारिणीषु मातृषु निजापत्यं प्रति विलोक्यते । असौ चास्ति सात्त्विकभावः 'स्तन्यस्रावः' ।[3] एवमेव त्रयस्त्रिंशत्सर्वमान्येभ्यो व्यभिचारिभ्यो व्यतिरिक्ता दयामृदुतासन्तोषादयोऽनेके भावा अनुभूयन्ते ये तत्तत्प्रसङ्गे स्वयमूह्याः । एतेषां विभावादीनां संयोगाद् व्यंग्यव्यंजकभावादभिव्यक्तः सकलसहृदयहृदयसंवादभाक् सहृदयेषु वासनात्मया स्थितः स्थायी वत्सलताभावो यदा स्वीकार इवाभिन्नोऽपि गोचरीक्रियते तदा यो रस आस्वाद्यते नासौ कथमपि शृंगार इति व्यवहर्तुं सुशकः । यद्यनुभूयते न चास्ति स शृंगारस्तदावश्यमेव भिन्नामधेयेनैव वक्तव्यः । लोक एव यदामितानन्ददोऽयं कथं प्रतिषिध्यते काव्ये नाटये चास्य पुष्टिः। वत्सलतायाः पुष्टिरेव वत्सलो रसः। आचार्यविश्वनाथेन वात्सल्य हेतूनां विभावादीनां सोदाहरणं निरूपणं प्रस्तुतं परमुदारतया किन्तु उदाहरणानां विश्लेषणं न कृतम् । कविकर्णपूरगोस्वामिना तूहाहृते पद्ये वत्सलरसस्य निष्पत्तिरपि कृता तस्य अलंकारकौस्तुभे, तेन वत्सलरसस्येदमुदाहरणमुपन्यस्तम्—

**आराज्जानुकरोपसमर्पणपरो जातस्मितं सञ्चर-**
**न्नङ्कारोहमाप्नुवन् रुरुदिषाविम्लानचन्द्राननः ।**
**अभ्यासार्थमुपेक्षितोऽपसरणप्रक्रान्तया सत्वरं**
**कण्ठेकृता यशोदया न न न नेतयाश्वासि बालो हरिः ।**[4]

---

१. कुमारसम्भव, १/२९

२. रसचन्द्रिका, विश्वेश्वरः कविचन्द्रः, ५/पृ० ८३

३. नवात्र सात्त्विकाः स्तन्यस्रावः स्तम्भादयश्च ते ।।
—हरिभक्तिरसामृत सिन्धुः, ३/४/२२

४. अलङ्कार कौस्तुभः, ५/उदाहरण संख्या-१०

पद्येऽस्मिन् विभावादीनामवस्थितिस्तेनैवं प्रकटिता—

अत्र ममकारः स्थायी। एष एकनिष्ठः आलम्बनं श्रीकृष्णः, उद्दीपनं तद्गतचंक्रमणादिः। अनुभावः कण्ठेकृत्यालिङ्गनादिः। व्यभिचारी हर्षादिः एष परोक्षो व्रजेश्वरीनिष्ठः प्रत्यक्षः सामाजिकनिष्ठः। उभयथैवाऽयमप्राकृतः।"[1]

स्थायिनः संज्ञायां भवतु नाम मतविशेषः परमियमत्र नास्ति काऽपि विचिकित्सा यच्छृंगाराद्भिन्न एवास्ति कोऽप्यलौकिकचमत्कारकारी वत्सलोरसः। काव्यशास्त्रिणो रससंख्याविस्तारभयाद् किमपि ब्रुवन्तु परं रसिकस्यैव वर्तमानात् रससम्बन्धे सहृदयाएव प्रमाणम्। आनन्दवर्धनाचार्योऽप्याह—"वैकटिका एव—रत्नतत्त्वविदः, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः?"[2]

---

१. तत्रैव, ५/पृ० १४८.
२. ध्वन्यालोकः. ६/पृ० २३३.

# भक्ति रस विमर्शः

लेखक—डॉ० कपिलदेव ब्रह्मचारी
प्राचार्य
श्री रामानन्द पीठ संस्कृत महाविद्यालय,
कर्णघण्टा-वाराणसी

संसार रोगेण चिरं सुतप्ताः कुतोऽपि शान्तिं न परां प्रपन्नाः ।
श्रुत्यब्धि निर्मन्थनलब्धसारं सन्तः सदा भक्तिरसं पिबन्तु ।।

आद्यरसाचार्येण भरतमुनिना केवलं शृंगारादयोऽष्टावेव रसाः स्वीकृताः किन्तु पश्चाद्वर्तिनः आचार्याः 'शान्तोऽपि नवमोरसः' इत्यादिना नवरसानामनन्ति । मुनीन्द्र मतानुसारेण वात्सल्यरसोऽपि यथाकथञ्चित्काव्यजगति स्वस्थानं गृह्णात्येव । एवमेव भक्तिक्षेत्रेऽपि भक्तिरसोऽपि स्वीकृतो भवेत्, कालान्तरे च तस्य स्वीकृतिः काव्य जगति भवेत्, किन्तु केवलं भक्तिरसविषये न तथाकृतम् । अपि चालङ्कारविषयेऽपि भरतमुनिना केवलं चत्वार एवालङ्काराः स्वीकृताः, किन्तु अधुनाऽलङ्करणरूपलक्षणेन काव्यशोभाधायकत्वरूपधर्मेण चालङ्कारा वैविध्यं लभन्ते । एवञ्च यथा ये रसा अलङ्काराश्च भरतमुनिना असम्मतास्तेऽपि विभिन्नाचार्यैः पल्लविताः स्वीकृताश्च तथैव रसनमथवाऽऽस्वादनादिरूपसामान्यधर्मेण भक्तिरसोऽपि स्वीकर्तव्य एव, किन्तु न तथा कृतं रसशास्त्रविद्भिः। यतो हि तेषां मते रसनिष्पत्तिविषये यत् सामान्यरूपमभिनवगुप्तादिना विहितं, तत् भक्तिरसविषये पूर्णरूपेण चरितार्थं न भवति । न च तेन भक्तिरसविषयककाव्यस्य समालोचना एव भवितुमर्हतीति । 'अतो रसशास्त्रविद्भिर्भक्तिरसो न स्वीकृतः । तस्मात् कारणाद् भक्तिशास्त्रनिर्मातृभिर्भक्तिरसज्ञैः भगवद्भक्तैः साधकैर्भक्तिरस आविष्कृतः ।

श्रीमदमभिनवगुप्तानुसारं रसास्वादनकाले समस्तलौकिकचित्तवृतीनां विलयः प्रधाननायकस्य चित्तवृत्तौ जायते, प्रधाननायकस्य चित्तवृत्तिस्तु साधारणीकरण प्रक्रियया स्वस्मिन् समस्तसहृदयानां चित्तवृत्तिं क्रोडीकुर्वती (आत्मसात् कुर्वाणा) रसास्वादस्य हेतुतामुपैति । तस्मिन्काले समस्तविभावादि भावाः तिरोहिताः सन्तः साधारणीकृतभावमात्रमेवावाशिष्यते । तदानीं सहृदयस्य चित्तवृत्तेर्बहिर्गमिता विनश्यति, तथा च तदानीं प्रधाननायकस्य चित्तवृत्तिरेवावशिष्यते । इत्थं च साधारणीकरणं संविद्विश्रान्तिश्च रसास्वादनेऽत्यन्तमुपयुज्येत इति स्थापितमभिनवगुप्ताचार्येण । किन्तु इयं प्रक्रिया भक्तिरसास्वादनोपयोगिनी नास्ति । तथा भक्तिरसो नानुभूयते ।

भक्तिमार्गे तु श्रीकृष्णलीलाया आनन्दोऽनुभूयते। तत्र श्री राधाकृष्णस्य रतिरूपेऽथवा यशोदाया वात्सल्यरूपेऽस्माकं मनसः परिणतिर्न भवति, किन्तु तत्र भगवद्विषयकरतिरेव जागर्ति। तत्र प्रधाननायकस्य चित्तवृत्तिरस्माकं चित्तवृत्तिं नाऽऽत्मसात् करोति, किन्तु सा केवलमस्माकं भगवद्विषयकरतिमुद्दीपयति। तत्र श्री राधाकृष्णयोः श्री सीतारामयोर्वा स्वरूपप्रच्छादने भक्तकवीनां नाभिप्रायः, किन्तु तस्य प्रबोधनमात्रमेवाभिप्रायो वर्त्तते। अतएव यावदेव वयं राधांप्रतिं श्रीकृष्णस्य रतेः परिशीलनं कुर्मः, तावत्कालपर्यन्तमेव भक्तिरसमाकमुद्दीप्यते। एवञ्च भक्तिमार्गे वयममिश्रितभावनाया आस्वादनं न कुर्मः, किन्तु श्रीकृष्णस्य भक्तिभावनया मिश्रितो भक्तिभाव एवाऽऽस्वाद्यते। इयं प्रक्रियां रसशास्त्रप्रतिपादकानां रसनिष्पत्तिविषयकसिद्धान्तात् सर्वथा भिन्ना वर्तते।

तात्पर्यमिदं श्रीकृष्णभक्तिमध्ये भक्तस्य या भावना समुद्भवति तथा चौपात्तभावातिरिक्तं सहृदयगतं यत् कृष्णप्रेमानुभूयते, तस्य समुचितं समाधानं रसशास्त्रे नास्ति। प्राचीन मतानुसारेण रसास्वादनविषये कृष्णलीला प्रशस्तिकाव्यमिव भक्तभावानामुद्दीपिका सती रसवदलङ्कारूपेण परिणमति। ततोधिका नास्ति काचिदपि भक्तिः। एतत्तु नोचितं, यतो हि तदवस्थायां कृष्णलीलागौणभूता एव भवेत्, तद् भक्ताचार्याणामभिमतं नास्ति। यतो हि भक्तिभावनया सह श्रीकृष्णलीलाऽपि तेषामभीष्टा, तस्याःसमुचितं समाधानं रसशास्त्रे नास्ति। तस्मादेव कारणाद् भक्तिरसरूपा नवीनासरणिः प्रसृता संस्कृतसाहित्यकाव्यशास्त्रजगति भक्तिरसज्ञैः।

अभिनवगुप्तमतानुसारेण स्वाभाविकचित्तवृत्तिरेव लोकवृत्तपरिनिष्ठिता यदा सहृदयैरभ्यस्यते तदा सा एव विभावादिभी रंगेऽवतीर्य सहृदयानां रसास्वादस्य हेतुभूता भवति। किन्तु भक्तिस्तु न स्वाभाविकी चित्तवृत्तिः, न तु तस्या अनुभावा एव बाहुल्येन समुद्भूताः ये सहृदयैरभ्यस्यन्ते, अपि चोद्धवादीनां प्रसंगे यत्र कुत्रापि रंगमञ्चे भक्तेरभिनयः क्रियते, तत्र तस्या भक्तेर्विवेचनं कर्त्तुं शक्यते, किन्तु यत्र राधाकृष्णयोः रतिभावस्याभिनयः क्रियते, येन तस्य समास्वादनं भवेत्, अर्थात् यदा भक्तिभावो न प्रत्यक्षीक्रियते तदा तस्य समास्वादनं कथम्? किन्तु भक्तिरसशास्त्रानुसारेण सः समास्वाद्यते। तस्या समुचितं समाधानं रसशास्त्रज्ञैर्न क्रियते। अतएव भक्तिरसः समुद्भावितो भक्तिरसज्ञैः।

प्राचीनरसतत्त्वस्यानुचिन्तनं नाट्यप्रसंगे कृतं रसज्ञैः। अतोऽस्मिन् मार्गेऽभिनयस्य सर्वथा प्राधान्यम्। काव्यजगति रसतत्त्वेभ्योऽनिवार्यता प्रदानायाभिनयस्य स्थानं गुणालंकारैः स्वीकृतम्, अर्थात् काव्ये गुणालंकारैः रसः समास्वाद्यते। किन्तु भक्तिमार्गे भक्तिविषयककाव्यस्यैव प्राधान्यं न तु नाट्यकाव्यस्य प्राधान्यं वर्तते, तत्र भक्तिनाटकस्य रचना तु गौणरूपेणैव कृता। इत्थञ्च प्रोक्तकारणेन रसशास्त्रदृष्ट्या भक्तिकाव्यानां विवेचनार्थमेव भक्तिरसविद्भिर्भक्तिरसरुपया नवीनरसधारया सिक्ता वसुन्धरा।

**प्राक्तनरसशास्त्रभक्तिरसशास्त्रयोर्भेदाभेदः**

भक्तिरसस्य रसविषये प्रक्रियाविषये च विचारणात्पूर्वं नितान्तविचारणीयोऽयं विषयो यत् प्राक्तनरससिद्धान्तस्य भक्तिरसं प्रति का उपजीव्यता वर्तते, यतो हि भक्तिरसस्य परि-

कल्पना नवीना सत्यपि प्राचीनरस सिद्धान्तात् सर्वथा विनिर्मुक्ता नास्ति । भक्तिरसशास्त्रस्य प्रतिष्ठापना च प्राक्तनरससिद्धान्तस्य पूर्वपीठिकायामेवाभूत् । अत एव प्रथमं भक्तिरसं प्रति प्राक्तनरससिद्धान्तस्योपजीव्यता विचार्यते ।

स्थूलरूपेण भक्तिरससिद्धान्तः प्राक्तनरससिद्धान्तेन पूर्णतया प्रभावितो वर्तते। 'विभावानुभावसंचारिसंयोगाद् रस निष्पत्तिः' इति भरतमुनिना प्रोक्तरसनिष्पत्तिविषयकसूत्रस्य प्रभावेण सर्वे परिवर्तिनो रसाचार्या न्यूनाधिकतया प्रभाविताः सन्ति । वस्तुतस्तत्सूत्रमेव रससिद्धान्तस्य मूलं वर्तते, यस्योपरिरसरूपबटवृक्षो विविधशाखाप्रशाखायुतः सन् पल्लवितः प्रवृद्धश्च । प्रोक्तरसपरिभाषानुकूलमेव विश्वनाथेनापि प्रोक्तम् ।

विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥
—(साहित्यदर्पणे, ३/१)

प्रोक्तरसपरिभाषामाश्रित्यैव रूपगोस्वामिना 'भक्तिरसामृतसिन्धौ' भक्तिरसविषये सूत्रितम्—

विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः ।
स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः ॥
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत् ।

यद्यपि प्रोक्तभक्तिरससूत्रे प्राक्तनरससूत्रात् पूर्णतया पार्थक्यं नास्ति, तथापि किंचिद् वैशिष्ट्यमस्त्येव । तत्तु तत्र सात्विकभावैरपि रसपरिपाको भवतीति पृथगुपादानं कृतम् कृष्णरतिरूपस्थायिभाव एव रसत्वमेतीति चोक्तमिति द्वे वैशिष्ट्ये वर्तेते । अन्यत्सर्वंतुल्यमेवोभयात्र प्राक्तनरसशास्त्रे वासनावासितरसिका एव रसास्वादनं कर्त्तुं क्षमाः । भक्तिरसोऽपि भक्तिवासनावासिताः शुद्धान्तःकरणा एव भक्तिरसास्वादनेऽधिकारिणो भवन्ति । एवञ्च विभावादीनां या परिभाषा रसशास्त्रे प्रोक्ता, सा परिभाषा एव भक्तिरसोऽपि दृश्यते । केवलं सात्विकभावस्यैवाधिकतयोपादानं कृतम् । भक्तिरससूत्रे सात्विकभावस्य पृथगुपादानेन ज्ञायते प्राक्तनरसाचार्यवत् सात्विकभावरसानुभावे नान्तर्भावः स्वीकृतो भक्तिरसज्ञैः । अन्यत्सर्वं तुल्यमेवोभयत्र । भक्तिरसे नायकः सर्वथा भगवान् एव, न तु प्राक्तनरसशास्त्रानुसारेण यः कोऽपि भवितुमर्हति । रसशास्त्रे नायिकागताष्टाविंशत्यलङ्काराणां निरूपणं कृतम्, भक्तिरसोऽपि तदनुसारेण भगवद्गतसात्विकालङ्काराणां निर्वचनं कृतम् । वैशिष्ट्यं तावदत्र भक्तिरसशास्त्रानुसारेण सर्वेषामालम्बनं दृष्टान्तश्च भक्ता एव भवन्ति, न त्वन्यत् यथा रसशास्त्रे । उद्दीपनस्य वर्णन प्रसंगे श्रीकृष्णस्य वेशभूषादीनां यद् वर्णनं, तदपि रसशास्त्रसम्मतमेव । अनुभावादीनां वर्णनप्रसंगे तेषां द्वौ भेदौ प्रथितौ, तदेव प्राक्तनात् पार्थक्यम् । सात्विकभावानां वर्गीकरणं सर्वथा नवीनं वर्तते, किन्तु तेषां संख्यायां परिभाषायां कार्यकारणभावादौ च न किमपि वैलक्षण्यं दृश्यते । तस्य संचारिभावानुभावाभ्यां पृथगुपादानं सर्वथा नवीनं वर्तते, तस्याऽऽवश्यकता रसशास्त्रेऽपि समनुभूयते । सञ्चारिणां संख्या परिभाषा च रसशास्त्रानुकूलैवात्र । त्रयस्त्रिंशद्व्याभिचारिसंख्यायां नात्रव्यतिक्रमः। यद्यप्यन्येषां सञ्चारिभावानामुद्भावना

कृतात्र तथापि तेषामन्तर्भावस्त्रयस्त्रिंशन्मध्य एव कृतः। वैशिष्ट्यञ्चात्र सञ्चारिभावानां परस्परं विभावतानुभावता च प्रतिपादिता। भावोदय-भावशान्ति-भावसन्धि-भावशबलता-दीनां रसशास्त्रानुकूलमेव प्रतिपादनं कृतमत्रापि भक्तिरसज्ञैरिति।

रसानां स्थायीभावानाञ्च परिकल्पना यद्यपि सर्वथा नवीनेव प्रतिभाति तथापि रस-शास्त्रस्य प्रभावात् सर्वथाऽसंपृक्ता नास्ति। केवलं रससंख्यायां तस्याः प्रविभागे च भेदो वर्तते। अपि च तत्र केवलं श्रीकृष्णसम्बन्धात् रसानां पुनराख्याने नूतनरस इव प्रतिभाति। रसानां वैर-मैत्रीस्थितिरपि रसशास्त्रानुरूपैवात्रापि। तेषां परस्परं वैरपरिहारश्च तेषामनु-कूलरीत्या एवात्र रसाभासे यत् किञ्चिन्मौलिकत्वं वर्तते। यथाहि प्राक्तनरसविदां मते रसनिष्पत्यपूर्णतायामेव रसाभासः, परवर्तिनामाचार्याणां मतेऽनौचित्ये रसाभासः, भक्तिरस-शास्त्रे तु रसनिष्पत्यपूर्णतायामनौचित्ये च रसाभासो भवति। प्रोक्तविवेचनस्य तत्त्वमिदं निःसृतं यत् न्यूनाधिकशब्दभेदेन परिवर्तने सत्यप्युभयत्र साम्यमधिकम्, वैषम्यं तु स्वल्पमे-वास्ति। अतएव सूक्ष्मेक्षिकया तयोः परस्परं पार्थक्येऽपि प्राक्तनरससिद्धान्तात् भक्तिरसोऽयं न सर्वथाभिन्नो वर्तते।

## भक्तिरसस्य लक्ष्यम्

'रसो वै सः' इत्यादिना श्रुतिप्रतिपादितस्य सच्चिदानन्दस्य परमरसस्वरूपस्य प्राप्तिरेव मानवजीवनस्य चरमं लक्ष्यमिति सर्वे रसज्ञा मन्वते। एवं रसतत्त्वस्यापि चरमं लक्ष्यमा-नन्द प्राप्तिरेव वर्तते। आनन्दप्राप्त्यर्थमेव सर्वे रसविदो रसशास्त्रेऽवगाहनं कुर्वन्ति। रस-तत्त्वचिन्तनस्येदमेव लक्ष्यं यत् रसतत्त्वानुचिन्तनेनाऽऽनन्दस्वरूपस्य परब्रह्मणः प्राप्तिर्भवेत्। 'आनन्दं ब्राह्मणो विद्वान्, आनन्दाद् ह्येवेमानिभूतानिजायन्ते', इत्यादि श्रुतिभिः प्रतिपादितं तद् ब्रह्म आनन्दस्वरूपमेव, तस्मादेव सर्वे जन्तवो जायन्ते 'तमेव लब्ध्वाऽऽनन्दी भवति' इत्यादिना पुनः तमेव प्राप्य सर्वैरानन्दोऽनुभूयते। स आनन्द एव जीवनस्य परमपुरुषार्थः। यो वै भूमा तत्सुखम् इत्यादिश्रुतिभिः स एवानन्दः प्रतिपादितः। दुःखस्याऽऽत्यन्तिकनिवृत्ति-रप्यानन्दस्वरूपैव। चतुर्विधपुरुषार्थजन्यंसुखमप्यानन्द एव। इत्थं भूतस्याऽऽनन्दस्य लाभायैव रसविदो रसे सततमुन्मज्जान्ते।

ये च लौकिका आनन्दास्ते तस्यैवाऽऽनन्दस्यांशाः, अतस्तेषां लौकिकाऽऽनन्दानाम-धिष्ठानमानन्दात्मकमात्मस्वरूपं ब्रह्मैवास्ति। जीवात्मपरमात्मभेदेन तस्य रूपद्वयमिति। वस्तुत आनन्दस्वरूप एव परमात्मा, किन्तु परब्रह्मणोंऽशत्वेन सच्चिदानन्दस्वरूपस्य तस्या-आनन्दांशो जीवेऽपि वर्तते। अग्नेः स्फुलिङ्गवदथवा सिन्धोर्जलकणवत् जीवेऽपिआनन्दानु-भूतिर्जायते। किन्तु आनन्दोऽयं स्वल्पांशो विषयजन्यश्च भवति। भरतप्रभृति रसज्ञानां लक्ष्यं तु तस्यैव जीवगतस्याऽऽनन्दांशस्योद्बोधनं प्रतिभाति। अनादिकालादारभ्य विविधजन्मनि परिभ्रमन् जीवो नानावासनाभिः परिव्याप्तोऽस्ति। मनुष्य जीवनेऽपि सा वासना जीवे-तिष्ठत्येव। किन्तु तत्र तस्मिन् जीवे काव्यार्थानुचिन्तनरूपं वैशिष्ट्यमवश्यमेव समुद्भवति। ततः स जीवो विभावादिभी रसमनुभवति। इत्थं भूतं रसास्वादनमेव भरतादिरसज्ञानामभि-मतं प्रतीयते। वस्तुत इयं रसानुभूतिः परमानन्दरसास्वादस्य पूर्वपीठिकैव, विषयप्रकृतजनैर-

नायासेन लभ्या च। किन्तु परमतत्त्वगतपूर्णानन्दस्यानुभूतिः पूर्वापेक्षयाऽतिदुष्करा, सर्वैर्दुर्लभ्या च। अनुमीयते तस्मादेव कारणात् भरतप्रभृतिभी रसाचार्यैर्निः श्रेयसः साधनीभूतश्रवणादीनां विषये न किमपि विचारितम्, न च संसारचक्रे निखिलानर्थमूलस्य जीवबन्धनस्य मूलमज्ञानस्योच्छेदनार्थमेव किमपि निरूपितम्। निखिलनिगम सिन्धून् निर्मथ्यभरतमुनिना या नाट्यसुधा समुद्भाविता, तया केवलं जीवगताऽऽनन्दांशस्यैवाऽऽस्वादनंभवति, यः पूर्णब्रह्मानन्दस्य क्षुद्रांश एव। इत्यञ्च रसशास्त्रज्ञभक्तिरसशास्त्रज्ञयोः रसविषये समानलक्ष्येऽपि सारभूतसिद्धान्ते महदन्तरमस्तीति विदितमेव प्रेक्षावतां सत्साहित्यपाथोधिमन्थनमन्दरायमाणानां शेमुषीजुषाम्।

एवञ्च प्रतीयते भरतादि प्रतिपादितजीवगताऽऽनन्दांशो भक्तिरसप्रतिपादकानामनभिमतमेव, तेषां चरमं लक्ष्यन्तु परमानन्दराशेर्भगवद्गतस्याऽऽनन्दस्य रसास्वादनमेव। अर्थात् पुष्कलरसावाप्तिरेव भक्तिरसज्ञानामाभिमतम्। सा च तदैव भवेद् यदा परमानन्द स्वरूपो भगवान् मनोगतः सन् तदाकारो भवेत्, तदनन्तरमेवासीमापरिच्छिन्नरसानुभूतिर्भवति।

उक्तञ्च मधुसूदनस्वामिना—

> भगवान् परमानन्द स्वरूपः स्वयमेव हि।
> मनोगतस्तदाकारो रसतामेति पुष्कलम्॥—भक्तिरसायने १/१०

यदा चित्तवृत्तिर्द्रवतां प्राप्य विभु-नित्यपूर्णबोधसुखात्मकं भगवन्तं गृह्णाति तदा तया न किमपि प्राप्यमस्ति लोके।[1] अतोभक्तिरसप्रतिपादितसाधनैर्मनसि विषयान् प्रति काठिन्यम्, भगवन्तं प्रति चित्तद्रवत्व च संस्थापनीयम्, यतोहि तदनन्तरमेव भगवत्साक्षात्करो जायते।[2]

भक्तिरसप्रतिपादितसिद्धान्तोऽयं भरतादिसिद्धान्तान् नातिक्रमते, किन्तु तेषां पल्लवनमात्रमेव स चकार। तदभिप्रायोऽयं प्रतीयते भगवतः पराङ्मुखो भूत्वा जलधारावत् मानवजीवस्य विषयेषु स्वाभाविकी प्रवृत्तिः,[3] विषयेष्वेव सरलरीत्या रसास्वादनं भवति। तमेव पन्थानमवलम्ब्य भरतमुनिना रसास्वादनं प्रतिपादितम्। यतो हि यावन्मानवचित्तवृत्तिः परमरसास्वादस्याऽऽनन्दांशमात्रे लौकिक जीवगतरसे पूर्णतया रसज्ञत्वं नानुभवति तावत् कथं परमानन्दस्य पूर्णरसास्वादने स्पृहालुता भवेत्। अर्थात् प्रथमजीवगताऽऽनन्दं प्राप्यैव भगवद्विषयाऽऽनन्दः प्राप्यते सोपानक्रमिकविकासरूपेणेति। एवञ्च प्रथमभूमिकारूढजनानां कृते प्राकृतरसस्य लक्ष्यं प्रदर्श्य मुनिना तत्रैव परमतत्त्वविषयाय प्राकृत रसायापिस्वीकृतिः प्रदत्ता।[4] वस्तुतस्तेन परमानन्दरसस्वरूपमलक्षितमेव वर्तते।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं यद् भरतमुनिना 'गुणजिह्विकान्यायेन प्राकृतजनानां

---

१. भक्तिरसायने १/३०

२. वही, १/३१

३. कठोपनिषदि, २/१

४. भक्तिरसार्णवे, पृ० ५८

प्रकृतरसपरिचयद्वारा 'असत्ये वर्त्मनिस्थित्वा ततः सत्यं समीहते' इति रीत्या अप्राकृतरसे (दिव्यरसे भक्तिरसे) चेतोऽवगाहनाय प्रथमं प्राकृतरस एव प्रतिपादितः। एवञ्च प्रयोजन-पार्थक्यात् प्रस्थानपार्थक्यमप्यभूत्। इत्थंभूतो भक्तिरसो भरतादीनां दृष्टिपथात् दूरमेव वर्तते। एवं च रससाधनायां प्राचीनार्वाचीनयोर्लक्ष्यभेदः परिदृश्यते।

**प्राक्तनरससिद्धान्तात्भक्तिरसस्य पार्थक्यम्—**

प्रोक्तप्रकारेण प्राचीननवीनयोर्लक्ष्यभेदे सति रसस्य निष्पत्तावास्वादने च भेदः स्वाभाविक एव वर्तते। लक्ष्यभेदेनसर्वस्मात् प्राक्तनरससिद्धान्तात् प्रभिन्नोऽयं भक्तिरससिद्धान्तः, अतस्तस्य तात्त्विकदृष्ट्या प्राचीनैः सह न कुत्रापि पूर्णरूपेण समन्वयः सम्भवति।

यथाहि विभावादिभिः कारणैः सह स्थायिभावानां संयोगादनुकार्ये रामादौ प्राधान्येन रसस्य निष्पत्तिरुत्पत्तिर्वा भवति, ततो नरे स आरोप्यते। इत्थं भूतस्य भट्टलोल्टस्य रस-निष्पत्ति विषयकोत्पत्तिवादेन सहाऽऽरोपवादेन सह वा न भक्तिरसस्य सङ्गतिःसम्भवति।

एवमेव शंकुकस्यानुमितिवादेन सहापि समन्वयो न भवति, यतो ह्यनुकार्ये मुख्य-रामादिरूपे गृहीतनटरूपपक्षेऽकृत्रिमरूपे गृहीतविभावादिहेतुनाऽनुकार्यभिन्ननटे रतिरनुमीयते एतयोर्द्वयोः रसविदां विप्रतिपत्तयो विदिता एव। भक्तिरसदृष्ट्या च भक्तिरसे भक्तस्य समास्वादितो निजभाव एव रसरूपतां प्राप्नोति, न तु तस्योत्पत्तिरनुकार्ये, न वा नटे पक्षधर्मता सम्भवति। यतो हि समास्वाद्यत्वात् रसः सामाजिकेषु तिष्ठति न त्वनुकार्ये रामादौ, तस्या वर्तमानत्वात्, तत्परत्वाभावाच्च।[1] न च नटे पक्षधर्मताऽपिसंभवति अपि च पक्षधर्मताग्रहणं तु यद्वा नटेऽनुकार्यगतभावस्याऽऽरोपो नाट्ये संभाव्यते किन्तु भक्तिरसे रसानुभूतिः श्रवणादि-द्वाराजायते। तत्कथमत्ररसस्योत्पत्तिरारोपो वानुमातुं शक्यः।

अनेनैव प्रकारेण भट्टनायकस्य भावकत्वभोजकत्वव्यापारयोरपि नात्र सङ्गतिः, तत्र च भावकत्वव्यापारेण विभावादीनां साधारणीकरणे न भोजकत्वव्यापारेण च सत्त्वोद्रेकजन्य-प्रकाशात्मिकाऽऽनन्दात्मिका च संविद्विश्रान्तिः सिध्यति। ततो रस उपभुज्यते। इत्थमेवा-भिनवगुप्तस्य प्रमातृगत-सहजातमनोभावस्याऽऽस्वादनेन भक्तिरसास्वादं न सम्भवति। यतो ह्यभिनवगुप्तमते नाट्ये सम्पूर्णसामाजिकानां मनोभावः प्रधानपात्रस्य मनोभावेन, प्रधान-पात्रस्य च मनोभावः सहृदयमनोभावेन सह तादात्म्यं भजते, तत्तु भक्तिरसे न सम्भवति। यतो हि भक्तिरसे सम्पूर्णसामाजिकानां मनोभावः प्रधानपात्रस्य भावे विलयः, प्रधानपात्रगत-भावस्य सहृदयगतभावेन सहैक्यं न सम्भवति। अपि च यथा लौकिकरसे भावस्याऽऽश्रया नाट्यगतपात्राणि भवन्ति, न तथा भक्तिरसे, यतो हि भक्तिरसे भावस्याश्रयस्तु भक्त एव भवति। लौकिक रसे श्रृङ्गारस्याऽऽश्रय आलम्बनञ्च परस्परं दुष्यन्तः शकुन्तला च, किन्तु भक्तिरसे राधाकृष्णयोरालम्बनरूपेण भक्तस्य चाऽऽश्रयरूपेण प्रतिपादनं भवति।

---

१. रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः॥—दशरूपके ४/३८

प्रोक्तचतुर्षु मतेषु आत्मस्वरूपस्य रसस्य नित्यता न सिध्यति। अत एव भावत्रयी-समूहालम्बनज्ञानानन्तरं जायमाना व्यवधानरहिता भगवत्प्रीतिरेव भक्तिरसरूपेण समास्वाद्यते भक्तैः।[1] तस्मादेव कारणात् भक्तिरसज्ञैर्भक्तिरसमूलानवीना पद्धतिः परिकल्पिता काव्य-शास्त्र जगति।

भक्तिरसमार्गे स्थायिभावस्य परिकल्पना सर्वथा नवीना। भक्तिरसशास्त्राचार्यैस्तु 'जात एवहि जन्तुरियतीभिः संविद्भिः परीक्षितो भवति' इति वक्तुं न शक्यते 'न वा' न ह्येतच्चेत-नाशून्यः प्राणी भवति इत्येवं वक्तुं शक्यते।[2] ते तु केवलं भगवद्विषयकरतिमेव स्थायिभावेन मन्यन्ते। भावोऽयमुपार्जितः सम्वर्द्धितश्च भवति। प्राक्तनसंस्कारत्वेन स जन्म जातोऽपि दृश्यते।

**स्वतन्त्रभक्तिरसस्य स्थापना**

तत्त्वातत्त्वविचारं विनैव परम्पराग्रहग्रहवशादेव भक्तिरसखण्डनार्थं बद्धपरिकरैः शास्त्रकोविदैर्भक्तिरसस्य स्वतन्त्रसत्ता नाङ्गी क्रियते। केवलं भावरूपत्वेन रसान्तरान्तर्भूतत्वेन वा भक्तिरसं स्वीकुर्वन्ति। एतत्समर्थकाः प्राचीनाचार्येष्वभिनवगुप्त-धनिकधनञ्जय-मम्मट-भोजराज-विश्वनाथ-पण्डितराजजगन्नाथप्रभृतयस्तथाऽऽधुनिकेषु च रङ्गाचार्यरेड्डी—प्रो० मा०दा० अलतेकर-प्रो० बी० पराञ्जपे-श्री पी०वी० काणे-प्रो० द०सी० पंगु-प्रो० रा० जोग रा० टिङ्गणेकरप्रभृतयश्च सन्ति।

विवेकपूर्वकं भक्तिरसस्थापने दृढसन्नद्धाः प्राचीनाचार्येषु रसज्ञेषु शाण्डिल्यः, नारद-श्री बोपदेव-महाप्रभु चैतन्यरूपगोस्वामी-जीवगोस्वामी-मधुसूदनसरस्वती-प्रमुखास्तथाऽऽधुनि-केषु भक्तशिरोमणि श्रीसूरदास-सन्तशिरोमणिभक्तप्रवरश्री तुलसीदास श्रीकरपात्रस्वामि-कविराजकृष्णदास विष्णुपुरीगोस्वामी-विश्वनाथ चक्रवर्ती-डॉ० वाटवे-डॉ०-रावजीमोडकर-रा० प्रधान-रा०भागवत-रा०म० गोरे-प्रो० द० केलकर—प्रो० रा० देशपाण्डेयप्रभृतयः सन्ति।

रसाचार्येण भरतमुनिना श्रृंगारादिनवरसाः स्वीकृताः किन्तु भक्तिरसविषये न किमपि प्रोक्तम्। पश्चादभिनवगुप्तानुसारेण भरतमुनिमते 'अत एवेश्वरप्रणिधानविषये भक्तिश्रद्धे[3] इत्यादिना निराकारोपासनायाः साकारोपासनायाश्च साक्षात् सच्चिदानन्दो ब्रह्मै-वाऽऽलम्बनं वर्तते। अतो भक्तिज्ञानयोश्च शान्तरसएवान्तर्भावः कर्तव्यः। दशरूपककारेण भक्तिर्भावरूपेव स्वीकृता।[4] भोजराजेन रससंख्यां वर्द्धयित्वापि तत्र भक्तिरसस्य गणना न कृता। अतो विचार्यते यत् तन्मतेऽपि भक्तेः रसत्वं नाङ्गीक्रियते। रतिर्देवादिविषया व्यभि-चारि तथाञ्जितः इत्यादिना मम्मटमते भगवद्विषयिणी रतिर्भाव एव न तु रस इति। विश्वनाथेन वात्सल्यरस स्वतंत्ररूपेण स्वीकृत्यापि भक्तिरसो न स्वीकृतः।

---

१. भक्तिरसायने ३/१३, २३, २४
२. अभिनवभारत्यां, पृ० २८२
३. नाट्यशास्त्रे ६/८३ अभिनवभारत्यां, पृ० ७७७/मधुसूदनशास्त्रिसम्पादिते।
४. दशरूपके ४/८३

संस्कृतकाव्यशास्त्राणामाचार्येषु पण्डितराजजगन्नाथेन किञ्चिदुदारदृष्टया निष्पक्षतया च भक्तिरससम्बन्धिविचार उद्भावितः। तन्मते भक्तिरसो दशमरसरूपेण स्वीकर्तव्यः । यतोहि व्यवहारे भक्तिरसः सर्वैर्मनुष्यैरनुभूयते । एतन्मते स्वतन्त्रभक्तिरसस्यालम्बनविभावः साक्षात् रसस्वरूपसच्चिदानन्दघन एव उद्दीपनभावो भागवतश्रवणादिरूपः, अनुभावस्तु भगवद्गुणश्रवणजन्यो रोमाञ्चाश्रुपातादिः, सञ्चारिभावो हर्षादिः, भगवद्विषयिणी रतिः (भक्तिः) स्थायिभावो वर्तते । अतो भक्तेः कथं न रसत्वमिति अपि च यदि 'विभावानुभाव व्यभिचारिसंयोगात् रसनिष्पत्तिः' इति भरतसूत्रमेव रसनिष्पत्तिविषये प्रमाणम्, तर्हि किं बाधकं भक्तिरसनिष्पत्तौ । विभावादिसर्वसहायकानां समवाये सत्यपि भक्तिदर्शनो रसः स्वीकरणीयः[1] । किन्तु रसनिष्पादनाय सर्वसामग्री सत्त्वेऽपि परम्पराग्रहग्रस्तः स भक्तिरसं पृथक् न मन्यते ।

अपि चास्मिन्विषये तेन नूतनभावोऽप्युद्भावितः । कामिनीविषयिणी रतिरेव कथं न भावः, यतो हि रतित्वेन कामिनीविषयिणी रतिर्देवादिविषयिणी रतिर्वा तुल्यैव । अथवा भगवद्विषयिणी रतिरेव (भक्तिः) रतित्वेन शृंगाररसस्यापि स्थायिभावोऽस्तु, कामिनीविषयिका रतिः सञ्चारिभावश्चास्तु, तयोर्हि विनिगमनाविरहात्[2] तत्र तस्मै समाधानं तेनैव दत्तम्, यत् साहित्यशास्त्रे भरतमुनिरीत्यैव रसादीनां व्यवस्था कार्या । अर्थात् भरतमुनिमते कान्तादिविषयिका रतिरेव शृंगाररसस्य स्थायिभावः, देवादिविषयिका रतिस्तु भावमात्रमेव । एतदेव मन्तव्यम् । अन्यथा पित्रादीनां पुत्रादिकं प्रति या रतिः सैव स्थायिभावः, जुगुप्साशोकौ च कथं न सञ्चारिभावः स्यातामिति ।[3] अतो भरतमुनिना व्यवस्थापिता रसस्य नवसंख्यैवोचिता । देवादिविषयकरतिकामिनीविषयकरत्योश्च तेन सादृश्यमुद्भावितम्, तत्तु नोचितम् । यतो हि भगवद्विषयकरतौ प्रेमाराध्यसुखस्य श्रीकृष्णसुखस्यैव वा केवलं प्राधान्यम्, किन्तु कामिनीविषयकरतौ चाऽऽत्मनः सुखस्य प्राधान्यं भवति । एवञ्च पण्डितराजजगन्नाथमतानुसारेण भक्तिरसोऽस्ति किन्तु परम्पराग्रस्ततया तेन पुरातनसरणिर्नोलङ्घिता । परवर्तिन आचार्या तामेवान्वसरन् ।

श्रीहेमचन्द्राचार्यमतेऽपि भक्तिर्न स्वतंत्रो रसः, अपि तु सा रतेरेव विशेषभेदो वर्त्तते । यतो ह्युत्तमेऽनुत्तमस्य या रतिः सैव भक्तिरिति कथ्यते। अतो भक्तिरसःस्वतंत्ररूपेण पृथक्तया

---

१. भगवदालम्बनस्य, रोमाञ्चाश्रुपातादिभिरनुभावितस्य, हर्षादिभिः परिपोषितस्य, भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात् । भगवदनुरागरूपाभक्तिञ्चात्रस्थायिभावः ।—रसगंगाधरे प्रथमानने, पृ० १८९

२. न च तर्हि कामिनीविषयाअपि रतेर्भावमस्तु, रतित्वाविशेषात्, अस्तु वा भगवद्भक्तिरेव स्थायित्वम् कामिन्यादिरतीनां च भावत्वं, विनिगमकाभावात् ।
—रसगंगाधरे प्र०अ० पृ० १९०

३. अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात् ? न स्याद् वा कुतः शुद्धभावत्वं जुगुप्साशोकादीनामित्यखिलदर्शनं व्याकुली स्यात् ।
—रसगंगाधरे प्रथमानने, पृ० १९१

न स्वीकर्त्तव्यः।[1] एवमेव शाङ्गदेवमतेऽपि केचित् भक्तिस्नेहलौल्यादीनामपि रसत्वं, तस्यै स्थायिभावान् श्रद्धार्द्रताभिलाषांश्च स्वीकुर्वन्ति। तत्तु नोचितं वर्तते, यतो हि ते सर्वे रतेरेव विशेषभेदा भवितुमर्हन्ति।[2]

कतिपयाऽधुनिकविद्वांसोऽपि भक्तेः रसत्वं नस्वीकुर्वन्ति यथाहि श्री रङ्गाचार्यमतानुसारेण 'रतिः' विस्तारात्मिका वर्त्तते। अतस्तत एव राष्ट्र-नृप-देव-गुरु प्रभृतीन् प्रति भक्तेर्विकासो भवति। अतः सा रतिरेव सर्वेषां पूर्वोक्तभावानां स्थायिभावो नदीनां पतिः समुद्र इव। तत्र वक्तव्यमिदमेकस्मादेवस्थायिभावाद् विभिन्नरसनिष्पत्या तु रसशास्त्रमर्यादालंघनं भवेत्। श्रीरङ्गाचार्यस्यापरेयमापत्तिर्यद् रसस्थापनाय विभावादियोजनया सहैव चारित्रिकवर्णनमप्यपेक्ष्यते। चारित्रिकवर्णनां विना केवलं भक्तिवर्णनेन भक्तिमार्गावलम्बनेन वा भक्तिः स्वतंत्ररसरूपेण भवितुं नार्हति। अतो भक्तिर्नस्वतंत्ररसः। अन्यथा रसशास्त्र मर्यादा भज्येत। तथापि प्रोक्ताऽऽपत्तिः समीचीना नास्ति। यतो हि भक्तिरसे न केवलं भक्तिरेव वार्ण्यते, अपि तु तत्र रसनिष्पत्त्यर्थं सकलसामग्र्योऽपि वर्ण्यन्ते। तत्र हि निखिल रसानन्द मूर्तिर्भगवान् एव भक्तिरसस्य विषयालम्बनभावः, भगवतो भावुकभक्तजनाः प्रियवल्लभाश्च भक्तिरसस्याऽऽश्रयालम्बनभावाः भागवतपुराणादीनां श्रवणम्, भगवत्सम्बद्धाः स्थल-शील-शक्ति-सौन्दर्याङ्गसौरभादयश्चोद्दीपनभावाः। प्रेमवशेन नृत्यं गानं भावविह्वलो भूत्वा रुदनंहसनादिकञ्चानुभावाः। भगवद्रतिश्च (भक्तिः) स्थायिभावोभवति। भक्तिभावापन्नैर्भक्तैः सह भगवतो लीलाविलास एव भक्तिरसस्यात्मा वर्तते। एतावत् सामग्री समवायेऽपि भक्तिरसस्याभावः कथम्?

**भक्तिरसविरोधिनां विदुषां मते भक्तिरसविरोधस्य कारणानि तन्निरसनं च—**

(क) भक्तिरसस्य स्वीकृतौ सत्यां रसादीनां भावादीनाञ्च प्रामाणिकव्यवस्थापकभरतादिनिर्णीतशास्त्रमर्यादोल्लङ्घनं भवेत्, तेन निखिलरसादिप्रतिपादककाव्यसाहित्यदर्शनमस्तव्यस्तं भूत्वा वितण्डाग्रस्तं जायेत, येन च नूतना समस्या काव्यसाहित्यशास्त्रे ऽव्यवस्था चोत्पद्येताम्। अर्थात् रसशास्त्रे परम्पराभङ्गो भवेत्।

(ख) भक्तिः केवलं भावमात्रमेव, न तु स्वतन्त्रो रसः।

(ग) भक्तिर्मूलभावो नास्ति।

(घ) निर्जीवमूर्ति प्रत्यात्मनिवेदनासक्तिरूपभक्तौ भावावेगानां तीव्रताया औत्कण्ठ्यस्य चासत्त्वात् सा केवला क्रियाहीनैव।

---

१. स्नेहो भक्तिर्वात्सल्यमितिहि रतेरेवा······अनुत्तमस्यउत्तमे रतिः प्रसक्तिः सैव भक्तिपदवाच्या।—काव्यानुशासने, पृ० ९८

२. भक्ति स्नेहं तथा लौल्यं केचिन्मन्वन्ते रसान्।
श्रद्धार्द्रताभिलाषांश्च स्थायिनस्तेषु ते विदुः॥
तदसत्, रतिर्भेदौहि भक्तिस्नेहौ नृगोचरौ।
व्यभिचारित्वमनयोः नृनार्योः स्थायिनौ तु तौ॥—संगीतरत्नाकरे, पृ० ८३९

(ङ) भक्तिः सार्वजनीनापि नास्ति । अर्थात्तस्यां व्यापकता न विद्यते तस्याः क्षेत्रं परिसीमितमेव । अत एव सा रसरूपो भवितुं नार्हति ।

(क) भक्तिरसस्वीकारे परम्पराभङ्गनिरासः—

स्वतन्त्रस्य भक्तिरसस्य स्वीकारे परम्पराभङ्गरूपप्रथमाऽऽपत्तिर्निर्मूला, अयथार्था च । यतो हि काव्यपदार्थो मनुष्याणां जलतरङ्गवन्नित्यपरिवर्तनशीलरचनात्मकक्रियाशक्तेः परिणामो वर्तते । काव्यक्षेत्रे साहित्यक्षेत्रे वा परिवर्तितयुगानुरूपा नूतना नूतना भावना प्रवृत्तिश्च, तस्य नवीनाभिव्यक्तिः, तस्या नूतनमाध्यमाऽऽलम्बनं च जायते । इदमेव भारतीय सजीवचिन्तनधारायाः काव्यशास्त्रस्य साहित्यशास्त्रस्य वा क्रमिकविकासस्य जाज्वल्यमानं प्रमाणमस्ति । भरतात्परवर्तिन आचार्या मुनिमतं विखण्ड्य रसालंकारगुणरीतिभावादिषु प्रायः सर्वेषु क्षेत्रेषु नूतनं तथ्यम् नूतनकाव्यसिद्धान्तम्; नूतनकाव्यसम्प्रदायस्य संस्थापनं कृतवन्तः, तेषां सिद्धान्तानां मान्यता च जाता । अत एव पण्डितराजजगन्नाथस्य कथनमिदं यत्—

देवादि विषयकरतेर्भक्तिरसरूपत्वेन स्वीकृतौ सत्यां भरतादिनिर्णीतकाव्यशास्त्रीयमर्यादाभङ्गो भवेत्, तत्तु नोचितम् यतोहि स्वयमेव तेन सञ्चारिभावविषये भरतादिनिर्णीतत्रयस्त्रिंशद्व्यभिचारिभावातिरिक्ता नूतना चतुस्त्रिंशद् व्यभिचारिभावा स्वीकृताः । एवमेव मम्मटादिभिः प्राचीनैः कृतस्य काव्यलक्षणस्य तद्भेदस्य चोल्लङ्घनं नास्ति, यतो हि यद्येवं न स्यात्तर्हि नवीनपदार्थस्योद्भावना कथं स्यात् ? कथं वा रसगङ्गाधरप्रभृति साहित्यरत्नं दृष्टिगोचरं भवेत् । अतः 'यथोत्तरं मुनीनां प्रामाण्याम्, इतिरीत्या नूतनविचारसरणिः समादरणीया । अत एव प्रोक्ततत्त्वहीनविचारेण भक्ति रसो न तिरोधीयते । अन्यथा सत्यान्नेत्रनिमीलनमेव वक्तव्यम् । अतः समस्तसाहित्य रसिकैरन्धपरम्परारहितै पक्षपातशून्यैश्च भक्तिरसः स्वीकर्तव्यः ।

'अष्टौ नाट्ये रसा स्मृताः' इत्यादिनाभरतमुनिस्वीकृताष्टरसादतिरिक्तो मम्मटेन 'शान्तोऽपि नवमोरसः, इत्यादिना शान्तरूपनवमरसः, विश्वनाथेन च स्फुटं चमत्कारितया वात्सल्यं च रसंविदुः इत्यादिरूपेण वात्सल्यरूपो दशमोरसः स्वीकृतः, तर्हि सर्वानुभवसिद्धो भक्तिरसः कथं न स्वीक्रियते ? तेनकिं रसज्ञाः परम्पराग्रहपङ्कनिमग्ना न भवेयुः ? अत एव न्यायमार्गे स्वप्रतिष्ठारक्षणार्थमपि भक्तिरसस्तैः स्वीकर्तव्यः ।

भक्तिः केवलं भावमात्रमेवेत्यस्य निरासः—

स्वतन्त्रभक्तिरसस्वीकारे भक्तिः केवलं भावमात्रमेवेति द्वितीयाऽऽपत्तिः समीचीना नास्ति। तत्र 'रतिर्देवादिविषयक व्यभिचारी तथाञ्जितः' इत्यादिना प्रायः सर्वेषां काव्यरसज्ञानां साहित्यिकानां मते देवादि विषयिणी भगवद् विषयक वा या रतिः, साकेवलं भावमात्रमेव, न तु भक्तिरस इति यः पक्षो वर्त्तते, स तु न समीचीनः यतोहि भक्तिरसज्ञानां मते सामान्यदेवविषयिका रतिर्भावो भवतु किन्तु सामान्यदेवापेक्षया 'रसो वै सः' इत्यादिश्रुत्या प्रतिपादितपरात्परभगवद्विषयिणी परमविलक्षणा या रतिः, सा तु न भावत्वमर्हति, अपि तु रसत्वमेव । सूत्रेऽपि 'देवः' एव कथितः, आदिपदेन तत्र इन्द्रादिदेवगुरुमातृपितृस्वामिप्रभृतिविषयिका रतिरेव

गृह्यते । ते सर्वे सामान्य जीवविशिष्टा एव परमात्मापेक्षया । अतः साक्षात् परमात्मविषयिकारती रसपदवाच्यैव । यतो हि इन्द्रादिदेवविषयिण्यी कान्तादिविषयिण्याञ्च रतौ सुखांशस्य लेशोऽपि नास्ति, किन्तु सुखाभास एव, तेन रसो न पुष्यति । परमात्मविषयिणी रतिस्तु पूर्णसुखस्य शेवेधिरेवास्ति । परमात्मविषयिका रतिर्दिव्यमहत्प्रकाशयुक्ता सूर्यसदृशी, किन्तु इन्द्रादिदेवविषयिका कान्तादिविषयिका च रति खद्योतवन्निष्प्रभा । अर्थात् कान्ताविषयिणी रतिः क्षणिकाऽऽनन्दजनिका, भगवद्‌विषयिणी रतिः सततं सर्वत्र पूर्णानन्ददायिका चिरस्थयिनी च । तस्मादविद्यया मोहितस्य मलिनसत्त्व प्रधानस्य देवस्य विषये या रतिः सा यदि भावो भवति तदा भवतु नाम, तत्तु समुचितमेव, किन्तु परमानन्दरसस्वरूपभगवद्‌विषयिणी रतिस्तु रस एव, अत एव सा रतिः कदाचिदपि भावोभवितुं नार्हतीति । अतएव मधुसूदनस्वामिमते जीवत्वविशिष्टाः परमानन्दभिन्ना ये देवादयस्तद्‌विषयिका रति भावपदेनोक्तम्, न तु परमात्मविषयिका रतिः, परमात्मविषयिका रतिस्तु स्थायिभावत्वेन रसत्वेनाभिधीयते ।[1] एवं सत्यपि कष्टं यन्नेत्रे निमील्य केचन रसज्ञाः भक्तिरसं भावमात्रमेव कथिवन्तः । औपनिषदानाम् ऋषीणां मतेऽपि शुद्ध चैतन्य सम्पृक्तो रत्यादिस्थायिभाव भक्तिरस एव । अत एव रस जन्याऽऽनन्दो ब्रह्मानन्दसहोदर इति कथ्यते । शृंगारादिनवरसास्तु ब्रह्मानन्दसहोदराएव सन्ति । एवञ्च भक्तिरसब्रह्मानन्दयोस्तु तत्त्वतस्तादात्म्यमेव विद्यते । अत एव मधुसूदनस्वामिमतो समाधिजन्यब्रह्मानन्दस्य भक्तिरसस्य च नामभेदोऽपि तत्त्वत एव ।[2] भक्तिरससंस्थापक श्रीरूप गोस्वामी समाधिजन्यब्रह्मानन्दं भक्तिरसतुलनायां परमाणुतुल्यमपि न स्वीकरोति ।[3] प्रतिपादितञ्च भागवतेऽपि यद् ब्रह्मानन्दापेक्षया भक्तिरसास्वाद एव परमश्रेष्ठः[4] इति । आनन्दवर्धनाचार्यमतेपि सर्वापेक्षया भक्तिरस एव सर्वश्रेष्ठः ।[5]

शृंगारादिनवरसानां स्थायिभावा विभादयश्च सर्वे रसोद्‌बोधकाः पदार्थाः लौकिका-

---

१. देवान्तरेषु जीवत्वात् परमानन्दप्रकाशनात् ।
तद्‌योज्यं परमानन्दरूपे न परमात्मनि ।।—भक्तिरसायने २/७५

२. समाधिसुखस्यैव भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थत्वात्, तस्मात् भक्तियोगः पुरुषार्थः परमानन्दरूपत्वादिति ।—भ०र० टीकायाम्

३. ब्रह्मानन्दो भवेदेप चेत् परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलामपि ।—भ०र०रि० १।१।१६

४. या निवृत्तिस्तनुभृतां तव पादपद्म ।
ध्यानाद् भवज्जनकथाश्रवणेन वास्यात् ।।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् ।
किन्त्वन्तकासिलुलितात् पततां विमानात् ।।—भागवते ४/९/१०

५. या व्यापारवतीरसान् रसयितुं काश्चित्कवीनां नवा,
दृष्टिर्यापरिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं,
श्रान्ता नैव च लब्धमब्धिशयनं त्वद्‌भक्तितुल्यं सुखम् ।।—ध्वन्यालोके, पृ० ५६७

एव भवन्ति। यथाहि भक्तिरसस्य स्थायिभावो भगवद्विषयिणी रतिः, निखिलरसानन्दमूर्तिः सम्पूर्णसौन्दर्यनिधिर्भगवान्कृष्णः तस्य राधादिप्रियवल्लभा भक्ताजनाश्चाऽऽलम्बनविभावाः, अनन्यासक्तिः, प्रेमाश्रु, रोमाञ्चः, दिव्योन्मादजन्यानेकानेकलोकबाह्यसीमातीतप्रणयव्यापाराश्चानुभावाः, हर्षादयश्च सञ्चारिभावा भवन्ति। एवञ्च भक्तिरसस्योद्बोधकाः, सर्वे पदार्था अलौकिका एव। अत एव भक्तिरसज्ञानां विदुषां मते स्वीकृता पराभक्तिरेव सर्वश्रेष्ठरसः कथ्यते।[1]

एवं सत्यपि महदाश्चर्यं वर्तते यत् मलिनसत्त्वाश्रितेषु नवरसेषु यत्र केवलं चिदानन्दोंऽशमात्रमेव स्फुरति, तत्रापि साहित्यरसज्ञैः रसानुभूतिः स्वीक्रियते। एवमेव कान्ताविषयकरतिजन्यश्रृंगाररसः सर्वेषु प्रधानरस इति तैः स्वीक्रियते। किन्तु 'एतस्यैवानन्दस्य मात्रया उपजीवन्ति' इत्यादिश्रुतिप्रतिपादितो यो ब्रह्मानन्दो वर्तते, यद्विषयकं सम्पूर्णानन्दानां श्रेष्ठं साक्षाच्चिदानन्दात्मकं ब्रह्मानन्दादप्यधिकं भगवद्भक्तिजन्यपरमानन्दमपि रसरूपतयाऽस्वीकृत्य मिथ्याप्रशंसापोषितचाटुकारवृन्दवन्दितराजविषयकरतिसदृश्येव भक्तिर्भावरूपैवेति स्वीकृतमिति महत्कष्टम्? अपि च साक्षात् सुखविरोधिनो रौद्रकरुणभयानकबीभत्सादयो रसरूपेण स्वीकृताः किन्तु अनन्तगुणाधिकभगवद्विषयकरतिजन्याऽऽनन्दो रसरूपेण न स्वीकृतः, अतः परं किमाश्चर्यम्? अत एव ज्ञायते गतानुगतिकास्ते सर्वे आचार्याः सत्यासत्यविचारपराङ्मुखाः सन्तः प्राचीनदुराग्रहैर्ग्रस्ता एव। अन्यथा कथं रसोद्बोधकसकलसामग्रीसमवेताऽपि भक्तिः रसरूपा न भवेत्? विवेचने तु वस्तुतो भक्तिरस एव सर्वश्रेष्ठो रसः।

केषाञ्चिन्मते भक्तिरसस्य पक्षद्वयं वर्तते। काव्यशास्त्रीयपक्षः आध्यात्मिकपक्षश्च। तत्र काव्यशास्त्रीयदृष्ट्या शब्दनिबद्धैर्विभावानुभावसञ्चारिभावैः सम्पुष्टा भगवद्विषयिणी रतिरेव भक्तिरसत्वेनाभिव्यज्यते आध्यात्मिकदृष्ट्या तु भक्तिः स्वयमेव रसो निगद्यते।[2] अस्तु तावत् किन्तु भक्तानां दृष्टौ तु श्रवणकीर्तनादिद्वारा द्रुतस्य भक्तचित्तस्य भगवदाकारतैव भक्तिरसः। भक्तिप्रतिपादकैर्विभावादिनिरूपकैः काव्यैः प्रतीयमान आनन्दोऽपि भक्तिरस एव। भक्तमनसि स्थायिभावतया प्रतिबिम्बितः परमानन्दस्वरूपो भगवान् स्वयमेव रसत्वं समधिगच्छति।[3] सर्वेषामिन्द्रियाणां भगवद्रूपाऽऽनन्दमयत्वमपि भक्तिरस एव कथ्यते।[4]

काव्यशास्त्रदृष्ट्या भक्तिरसस्य स्थायिभावो भगवद्विषयिणी रतिर्वर्तते।[5] श्रृंगार-

---

१. पराभक्तिः प्रोक्ता रस इति रसास्वादनचणैः।

—भक्तिचन्द्रिकायां, पृष्ठे १३० निर्णयसागर संस्करणे

२. ईश्वरविषया रतिरेव भक्तिरसः। वाचस्पत्ये बृहत्संस्कृताभिधाने।

३. भगवान् परमानन्दस्वरूपः स्वयमेव हि।
मनोगतस्तदाकारो रसतामेति पुष्कलम्॥ —भक्तिरसायने १/१०

४. यत्र मनः सर्वेषामिन्द्रियाणामानन्दमात्रकरपादमुखोदरादिभगवद्रूपता तत्र भक्तिरस एव। —भक्तिमार्तण्डे पृ० १२०

५. स्थायीभावोऽत्र सम्प्रोक्तः श्रीकृष्णविषया रतिः। —भ०र०सि० २/५/२

रसस्य च कान्तविषयिका रतिः। यद्यपि रतित्वेनोभयत्रैक्यं, तथापि सूक्ष्मदृष्ट्या भेदस्तत्रापि। यतोहि श्रृङ्गाररसस्य स्थायिभावो दाम्पत्यविषयिका रतिः, अतएव तत्र सुरतस्पृहा भवति।[1] किन्तु भगवद्विषयकरतौ तादृशी न कापि वाञ्छा भवति भक्तानाम्। तत्र तु भगवतो दिव्यगुणादिश्रवणद्वारा द्रुतचित्तस्य निरवच्छिन्ना धारावाहिनी भगवदाकाराकारितवृत्तिः समुत्पद्यते।[2] तस्यामेव द्रुतचित्तवृत्तौ विभावादिना रसरूपतयाभिव्यक्तं परमानन्दलक्षणं स्थायिभावं रसं वदन्ति रसविदः।[3]

विश्वनाथमतेऽपि विभावादिभिर्व्यक्तरत्यादिस्थायिभाव एव रसत्वं प्राप्नोति।[4] स्थायिभाव एव रस इत्यस्मिन् विषये भक्तिरसायनकारस्य विचारस्तु शैत्यपावनत्वेन 'गङ्गायां घोषः' इतिवदौपचारिकमात्रमेव, न तु तथ्यमिति।[5] बोपदेवमते परमानन्द-रसस्वरूपतया व्यासादिप्रभृतिभिर्निरूपितस्य विष्णोस्तद्भक्तानां वा रसात्मकस्य चरितः तस्य श्रवणादिजन्यश्चमत्कार एव भक्तिरसः कथ्यते।[6] तस्मात् भक्ति रस एव सर्वेषु रसेषु श्रेष्ठतमः, सर्वेषामुपजीव्यश्च। स एव प्राधान्येन मानवेषु श्रद्धोपासनादिरूपेण दृश्यते। अत एव भक्तिरसो भावमात्रमेव भवितुं नार्हति, स स्वतन्त्ररसतया स्वीकर्तव्यो रसिकैः। यद्यपि संस्कृतकाव्यशास्त्रस्य महाविदुषा श्रीजगन्नाथाचार्येण सहृदयहृदयास्वाद्य-त्वात् प्रत्यक्षप्रमाणेन तर्कसम्मतयुक्त्या च भक्तेः रसत्वं स्थापितम्, तथापि पुनः परम्परा-भङ्गभीत्या तस्याः रसत्वं निराकृतम्। परम्पराभङ्गरूपदोषस्य निरासः पूर्वमेवकृतः।

भक्ताचार्यैर्भरतमुनिप्रतिपादितरससूत्रानुसारेण भक्तिरसः प्रतिपादितः। यद्यपि भक्तिरसस्य बीजं बोपदेवेन मुक्ताफले, लक्ष्मीधरेण च भगवन्नामकौमुद्यां, ततः पूर्वं नारदेन स्वकीये भक्तिसूत्रे, शाण्डिल्येन स्वीये भक्तिसूत्रे च स्थापितम्, ततः पूर्वमपि भक्तिरसस्य बीजं वैदिकवाङ्मयेऽपि समुपलभ्यते किन्तु रसशास्त्रदृष्ट्या भक्तिरसस्य साङ्गोपाङ्गनिरूपणं तु रूपगोस्वामि-मधूसूदनस्वामि-जीवगोस्वामि-नारायणभट्ट-कविकर्णपूर-विश्वनाथ-चक्रवर्त्ति कर-पात्रस्वामि प्रभृतिभिः कृतं स्वस्वग्रंथेषु।

---

१. कामः शरीरसम्बन्धविशेषस्पृहालुता। —भक्तिरसायने २/३

२. मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥ —भागवते ३/२९

३. भगवद्गुणश्रवणादिजनितद्रुतिरूपायां मनोवृत्तौ विभावादिभिः रसरूपतयाभिव्यक्तो भगवदाकारतारूपरत्याख्यः स्थायिभावःपरमानन्दसाक्षात्कारात्मकः प्रादुर्भवति स एव भक्तियोगः (भक्तिरसः)। —भक्त्यधिकरणमालायाम् पृ० १७

४. विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।
रसतामेति रत्यादिस्थायिभावः सचेतसाम्॥ —साहित्यदर्पणे ३/१

५. स्थायीभावो रस इतिप्रयोगस्तूपचारतः॥ —भक्तिरसायने ३।१४

६. व्यासादिभिर्वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरितस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो भक्ति रसः॥ —मुक्ताफले पृष्ठे १६७

भक्तिरसज्ञानां मते भक्तिरस एव मूलरसोऽस्ति, अन्ये तु तस्यैव प्रभेदाः सन्ति। कविकर्णपूरमतेन शृङ्गारादयो नव, वात्सल्यमितिदश, प्रेम चेत्येवमेकादशरसेन सह द्वादशो भक्तिरसः स्वीकृतः।[1] अन्ये सर्वे भक्तिरसज्ञास्तु भक्तिरसमेव मूलरसरूपेण स्वीकुर्वन्ति।

पूर्वोक्तविवेचनस्य तात्पर्यमिदं यत् भरतप्रतिपादितरससूत्रानुसारेण सर्वेषां रसज्ञानां मते तत्रापि भक्तिरसज्ञानां मते रस एव भवितुमर्हति न तु भावः।

(ग) भक्तिर्मूलभावो नास्तीत्यस्य खण्डनम्—

भक्तिर्मूलभावो नास्तीति तृतीयाऽऽपत्तिरपि समीचीना नास्ति। यतोहि भक्तिरसज्ञानां मते भक्तिरसस्य भक्तिरेव मूलस्थायिभावः।

तत्र विचारणीयोऽयं विषयो यद् भगवद्विषयिका भक्तिः स्थायिभावत्वं कथं प्राप्नोति। यतो हि पूर्णभक्तिस्तु प्रेमाभक्तिरिति कथ्यते। तस्याः पूर्वमेव रतिर्भक्तिर्वा स्थायिभावत्वं लभते। एवं चात्यन्तप्रवृद्धा भक्तिरेव प्रेमाभक्तिः। अपि च विभावादिभिः परिपोषिता रतिरेव रसत्वमेतीति सिद्धान्तः किन्तु प्रेमा भक्तिस्तु विभावादि विनापि स्वसत्त्वेन रसत्वमधिगच्छति। रतिर्भावान्तरो वा स्थायिभावः सन्नेव रसरूपेण परिणमते। एवं रसरूपात् पूर्वंस्थायिभाव एव भावपदेनाप्युच्यते। इत्थं च भक्तेः कथं स्थायिभावत्वमिति। मनसः शुद्धसत्त्वप्रधानावस्था भावः स एव भक्तितत्त्वस्य मूलस्थायिभावः, स च रति-प्रेम-स्नेहादि-शब्देनाप्यभिधीयते। इत्थंभूतो भाव एव रसप्रक्रियया रूपगोस्वामिमतानुसारेण स्थायिभावः सञ्चारिभावश्चेति। तन्मते उभावपि भावपदेनाभिधीयेते। भावाभिनिष्पत्तिविषयेऽधिकारिभेदप्रसङ्गे तेन प्रतिपादितम्-गरिष्ठम् (कर्कशचित्तम्) तथा लघिष्ठम् (कोमलचित्तम्) इति भेदेन तस्य साधकस्य भेदद्वयमिति। तत्र प्रथमोऽपि वज्र-सुवर्ण-जतुसादृश्येन त्रिविधः। तत्र भावरूपाग्निना वज्रचित्तं कदापि न द्रवति, सुवर्णचित्तं तापाधिक्येन द्रवति, जतुचित्तं तु तापलेशेनापि मासृण्यमेति। भावविषये चित्तद्रवत्वविषये वा स्वामिमधुसूदनस्य विचारो प्रदर्श्यते—चित्तं जतुरिव साधनैः प्रवहणशीलत्वमेति। यथाग्निना प्रवहणशीलं जतुः पात्रविशेषे संस्थाप्य विशिष्टाऽऽकृतिरूपेण परिकल्प्यते तथैव काम-क्रोध-लोभ-मोह-हर्ष-विषादादिभिर्भावैः जतुरूपं चित्तं द्रवति, द्रवितं चित्तं यदा भगवदाकाराकारितं भवति तदा तदेव भक्तिरित्युच्यते। अत एव तस्य भक्तिलक्षणस्य भावोऽयं यदा श्रुतश्रवणादिभागवतधर्मैर्द्रुतं चित्तं धारावाहिकतां प्राप्य भगवदाकारतायां परिणमते तदा द्रुतमनोवृत्तिरेवभक्तिरिति कथ्यते। द्रुतमनोवृत्तित्वं नाम भगवदाकाराकारितत्वम्।[2]

चित्तस्य भगवदाकारतायां प्राप्तायां सत्यां भगवद्रूपेणैव सर्वे पदार्था दृश्यन्ते। यतो यदा विम्बस्य प्रतीतिर्भवति तदैव सः प्रतिविम्बत्वेनाभिधीयते। स च भक्तेः पराकाष्ठा

---

१. अलङ्कारकौस्तुभे पृष्ठे ११०

२. द्रुतस्य भगवद्धर्माद् धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥ —भक्तिरसायने २/३

विद्यते । निखिलविश्वं भगवन्मयमेव ये भक्ताः पश्यन्ति त एव परमभागवता इति कथ्यन्ते । इत्थं च भगवदाकारता परिणतिरूपा भक्तिरेव मूलस्थायिभावत्वं प्राप्नोति । तत्र भगवान् परमानन्दरसरूपो यदा मनोविशिष्टं भगवत्स्वरूपं विभावादीनां संयोगादभिव्यज्यते तदा परमानन्दस्वरूपभक्तिरसः समास्वाद्यते । अथवा प्रकारान्तरेण भगवदाकारतारूपपरिणतिरियं यदाऽग्निसंयोगेन जतुर्द्रवति तदा तस्मिन् यो धातुरागो निक्षिप्येत पुनश्च तापकापगमे जतोः काठिन्ये सति स एव धातुरागः स्थायीरूपेण तिष्ठति । एवमेव यदा कामादिभिश्चित्तं द्रवति, तदा तस्मिन् यदि भगवत्प्रेमरूपधातुरागो निक्षिप्येत तदा सः चित्ते स्थायित्वं प्राप्नुयात् । चेतसः पौनः पुन्येन काठिन्ये सति तन्नैव मुञ्चति । पुनः काठिन्यानन्तरं चेतसो द्रवत्वे सति तत्र निक्षिप्तराग एव प्रतिभासते । यथा श्रूयते कामादिरागैर्यदा गोस्वामी तुलसीदासः स्वपत्नीमनुगच्छतिस्मं तदा तस्मिन् सा भगवद्रूपानुरागमेव स्थापितवती । तदन्तरं गोस्वामीमहोदस्य चित्तं भगवदनुरागी बभूव । दृश्यतेऽत्रापि प्रथमं कामादिरागैःद्रुत-चेतस्येव भगवद्भावस्थापनम् अतः प्रोक्तप्रक्रिया समीचीना प्रतिभाति । अत एव भगवद्भक्तिरेव स्थायिभावो भक्तिरसस्येति भक्तिरसज्ञानां विदुषां मतम् ।

तत्र प्रष्टव्यमेतत्-प्रोक्तप्रकारेण भक्तिर्भगवदाकारितरूपा भगवत्प्रेमरूपा चेति द्विविधा भवितुमर्हति । अपि च भक्तिरेवाऽऽलम्बनविभावः स्थायिभावश्चेति भवेत्, तत्कथं सम्भवति ? उच्यते तत्र नात्र विरोधः यतो हि विम्बप्रतिविम्बभावेन तयोर्भेदो व्यवहारसिद्धो वर्तते । प्रतिपादितञ्चैतत् रूपगोस्वामिना रतिविमर्श प्रसङ्गे भक्तिरसामृतसिन्धौः—

आविर्भूय मनोवृत्तौ व्रजन्ती तत्स्वरूपताम् ।
स्वयं प्रकाशरूपाऽपि भासमाना प्रकाश्यवत् ॥ —१/३/२

अयमभिप्रायो मनोवृत्तौ भगवद्रतिरुत्पद्य भगवदाकारतां प्राप्नोति । एवं भक्तिः प्रकाशरूपा भवति किन्तु तस्याः प्रतीतिस्तु प्रकाश्यसादृश्यमाप्नोति । तत्र प्रकाश्यो भगवान् स्वयमेव। यथा प्रदीपो यस्मिन् प्रकोष्ठे प्रज्वलति, तत्र तस्य प्रकाशः तद्वदेव प्रतिभाति तथैव यदा रतिर्भगवन्तं प्रकाशयति, तदा सा भगवत्स्वरूपेणैव प्रतीयते । अनेन प्रकारेणाऽऽलम्बनविभावस्य स्थायिभावस्य चैक्यापत्तिर्दूरं पलायिता। इयमेव भगवद् भक्तिर्भक्तिरसाचार्याणामभिमता स्थायिभावरूपेण तत्र तापकादीनामपि सहयोगो भवति । इत्थं च मिश्रितभाव एव तेषामास्वादगोचरः । अत एव तेषामभिमतमिदं सर्वेषां रसानां मूलं भगवद्रतिरेवेति । तेनैव कारणेन भक्तिरसो मुख्यगौणभेदेन द्विविधः । एवञ्च मिश्रितभावानामास्वाद गोचरस्यापि समाधानं जायते । तस्मान्नात्र कस्यापि विसंवादस्यावकाशः । किन्तु शृङ्गारादिलौकिकरसेषु भगवदाकारताया निर्वाहः कथं स्यादिति चेदुच्यते तत्रापि लौकिकरसविषयेषु भक्तिरसज्ञा निर्भ्रान्ता एव । यतो हि 'आनन्दाद् ह्येवेमानि भूतानि जायन्ते '[1] इत्यादिश्रुत्या सर्वे प्राणिन आनन्दादुत्पद्यन्ते, आनन्देन जीवन्ति, तस्मिन्नेव विलीयन्ते च । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्या केवलं ब्रह्मैव सत्यम् । विश्वस्य सम्पूर्णं पदार्था ब्रह्ममया एव, अतस्ते सर्वे पदार्था आनन्दरूपा एव । अतएव कान्तादावपि ब्रह्मण एवाऽऽनन्दांशो वर्तते, किन्तु मायायाः

१. तैत्तिरीयोपनिषद् ३/२/१

प्रभावेण कान्तादिः ब्रह्ममयत्वेन न प्रतीयत इति त्वन्यत् ।

आवरणविक्षेपरूपेण मायाया द्वे शक्ती, तत्राऽऽवरणशक्त्या सत्यस्य तिरोधानं विक्षेपशक्त्या च नवीनतत्त्वस्य प्रकाशनं भवति । यथाहि आवरणशक्त्या रज्ज्वाः तिरोधानं क्रियते, विक्षेपशक्त्या च तत्राविद्यमानस्य सर्पस्य प्रतीतिः । तथैव कान्तादौ मायाया आवरणशक्त्या ब्रह्मण आनन्दांशस्तिरोधीयते, विक्षेपशक्त्या चासत्कान्तादिश्च पुनः प्रतीयते । कान्तादावप्यानन्दस्य कारणं सुखस्वरूपचैतन्यधनं ब्रह्मैव । अतो मनोवृत्तेस्तदाकारतायां सत्यामप्यावरणशक्त्या तन्न प्रतीयते । कान्तादौ ब्रह्म सत्यमेवास्ति, किन्तु ब्रह्मरूपेण न ज्ञायते, ज्ञायते तु कान्तात्वरूपेण । यदा विभावादीनां संयोगात् सत्त्वोद्रेकादिनाऽऽवरणभङ्गो जायते तदैव क्षणमात्रं ब्रह्मानन्दोऽनुभूयते। तत्र केवलमावरणस्यैव भङ्गः । न तु तत्र विक्षेपस्य सर्वथाऽभावो भवति । अतो ब्रह्मानन्दस्य प्रतिभासत्वेऽपि कान्तादीनां प्रतीतिर्भवत्येव । तत्र लौकिकवाक्यं प्रवर्त्तकं भवति, किन्तु काव्यवाक्यं तु प्रवर्तकं न भवति, अपि त्वास्वादयोग्यमेव भवति एवञ्चाऽऽनन्दांशपूर्णकान्तादीनां प्रतिभासश्चेतसि भावरूपतां धारयति किन्तु तत्र जाड्यस्य सम्मिश्रणमस्ति । अतस्ते भावाः पूर्णरसत्वं न प्राप्नुवन्ति, किन्तु जाड्यस्यामिश्रणाद् भगवद्विषयकभावः पूर्णानन्दत्वं प्राप्नोति । विवेचनस्य तात्पर्यमिदमेव यद् भगवद्विषयिका भक्तिरेव मूलभावो स्थायिभावो वा विद्यते ।

(घ) भक्तेर्निष्क्रियत्वनिरास :

भक्तिरसविरोधिभिरुच्यते यद्भक्तिर्निष्क्रिया भवतीति । यतो हि तत्र निर्जीवमूर्तिं प्रत्यात्मनिवेदनासक्तित्त्वेन भक्तौ भाववेगानामौत्कट्याभावात्तत्र क्रियाहीनत्वं भवति अत एव भक्ती रसो भवितुं नार्हति, अपि तु केवलं भावमात्रमेव भवितुमर्हति ।

तदेतन्न समीचीनम् । यतो हि श्रीमद्भागवतभक्तिरसायनोज्ज्वलनीलमणि-भक्तिरत्नावली-भक्तिरसामृतसिन्धु-भक्तिरसार्णव-गीतगोविन्दप्रभृतिभक्तिग्रन्थेषु भक्तानां भक्तिप्रभावापन्नानुभावाः प्रभावपूर्णतया च वर्णिताः, येन निष्क्रियत्वस्यारोपः स्वयमेव खण्ड्यते । तत्तद्भक्तिग्रन्थेषु भक्तानां क्रिया विशदरूपेण वर्णिताः, तर्हि कथं तस्य निष्क्रियत्वम् ? मानवानां ज्ञान-क्रियाभावनावेगानां प्राधान्यमिति भक्तिशास्त्रप्रवर्त्तकानामभिमतम् । स्वेष्टं प्रति भावनाया उत्कृष्टावस्थायां यत्र तीव्रवेदनयाऽश्रुकणाः निःसरन्ति—तत्रैवाऽऽनन्दस्य शतसहस्त्रपाटलप्रसूनान्यपि विकसन्ति । इत्थंभूताया वेदनाया आनन्दस्य च विरोधाभासोऽन्यत्रदुर्लभः । इत्थं भूतदिव्योन्मादविशिष्टावस्यामेव भक्तः कदाचित् हसति, कदाचिद् रोदिति, कदाचित् प्रलपति, कदाचित् तूष्णीं भवति, कदाचिच्चोच्चैः हरिगुणगणं गायति ।[1]

अपरञ्च भक्ता निर्जीवमूर्तिं प्रत्यात्मनिवेदनं न कुर्वन्ति, किन्तु मूर्त्युपलक्षितं निखिलजगन्नियन्तारं चराचरव्यापिनं चेतनरूपेण सर्वत्र समस्थितं सर्वान्तर्यामिणं सच्चिदानन्दघनं परमप्रेमास्पदं प्रत्यात्मनिवेदनं कुर्वन्ति ।

---

१. (क) एवंव्रत, स्वप्रिय······लोकबाह्यः ॥भाग० ११/२/४०
(ख) क्वचिद् रुदन्त्यच्युत······निवृताः ॥ भाग० ११/३/३२

महाकविजयदेवो गीतगोविन्दे राधिकामेकान्तप्रेमनिर्भरभक्तरूपेण निरूपयन् तस्याः प्रेमोन्मादस्यातीव मर्मस्पर्शिचित्रणमकरोत्। यथाहि विरहोन्मादिन्या राधिकाया वक्षः-स्थलस्य मालापि स्वकृशतनुत्वाद्, भारतयैव तया समनुभूयते सा सरसमसृणचन्दनस्य लेपमपि सशङ्कतया विषवत् पश्यति, मदनानलदग्धदेहा उच्चैर्निःश्वसिति। जलकणयुक्ता नाल-विहीननलिनीव नेत्रे इतस्ततो निक्षिपति। सन्ध्याकालेऽपि कपोलतलं करपल्लवेष्वाश्रित्य हरिं ध्यायति। सा किसलयकुसुमशय्यामग्निमिव विलोकयति। विशुद्धप्रेमभावनया सा हरिं रटति पौनः पुन्येन। सा कदाचित् वेदनाधिक्येन सीत्करोति। कदाचित् विलपति। कदाचि-दुद्भ्रान्ततया इतस्ततः परिधावति। कदाचित् भूमौ पतति। कदाचिच्च मूर्च्छति इत्थं च राधिकाया बहवोऽनुभावाः परिदृश्यन्ते। तत्कथं तत्र निष्क्रियता वक्तुं शक्यते। अतो भक्ति-रसे निष्क्रियत्वस्याऽऽरोपो न कर्त्तव्यः।[1] एवमेव निखिलरसानन्दमूर्तिर्भगवान् श्रीकृष्णोऽपि स्वप्रियतमाया विरहतापेन दह्यते। दीर्घमुष्णं च निःश्वसति। समुत्सुकनयनैश्चतुर्दिक्षु पश्यति। कदाचिदन्यमनस्कतया कुञ्जे गच्छति निर्गच्छति चेत्यादयः सर्वे भावाः राधा-कृष्णयोरेकान्त-प्रेमनिर्भरभक्तानामेव वर्तन्ते। ते च भगवद्विषयकानुभावाः। यदि राधिका 'एकान्तप्रेम-निर्भरभक्तरूपेण' न निरूप्यते चेत्तर्हि जयदेवस्य विलासिन्या राधायाः श्रीकृष्णस्य च विलासकला अकालकवलिता भवेत्। अस्तु विचार्यतेऽधुना यस्मिन् भक्तिरसे एतावदधिकतल-स्पर्शिमानसिकदशानां मार्मिकाभिव्यञ्जना दृश्यते, तत्र च प्रतिक्षणं जीवनस्यापारपरिस्थितीनां शतसहस्रश उच्चावचव्यापारा दृश्यन्ते, तत्र च निष्क्रियत्वस्यारोपो महान् भ्रम एव। यतोहि तत्र विस्मयहर्ष-अहंभावादयः पूर्वोक्तानुभावाश्च सन्ति। भक्तिभावापन्नपुरुषोऽहर्निशं भगवतो भजने कीर्तने स्मरणे वन्दनादिक्रियासु च संलग्नो भवति। येनान्यजनोऽपि तस्य प्रभावेण प्रभावितो भवति। इत्थंभूतेऽपि तत्र निष्क्रियत्वस्याऽऽरोपोऽरमणीयविचार एव तथाऽन्ध-परम्परानुमोदनमात्रमेव प्रतीयते। कथमन्यथा सक्रियायामपि भक्तौ निष्क्रियत्वस्याऽऽरोपः स्यात्।

**(ङ) भक्तेः सार्वजनीनत्वम्—**

भक्तिरसस्य व्यापकत्वे सार्वजनीनत्वे वा किमपि वक्तव्यं नास्ति, यतो हि भक्तिः सर्वस्मिन् काले सर्वेषु देशेष्वत्यधिकमहत्त्वपूर्णरूपेण दृश्यते। प्रमाणं चात्र सर्वदेशेषु विभिन्न रूपेण नामान्तरेण च तस्य विपुलवाङ्मयमेव। तस्याः बहवो भेदा यथाहिदेशभक्तिः, प्रभु-भक्तिः, राजभक्तिः मातृभक्तिः, पितृभक्तिः, गुरुभक्तिः, देवभक्तिरित्यादयः। मराठिलेखक श्रीशीवरामपन्त महोदयेन 'देशभक्तिरसः, तस्य स्थायिभावश्च देशाभिमानमिति प्रतिष्ठापितम्।[2] तन्मते यत्र निरभिमानतया श्रद्धया च प्रभोर्गुणानां संकीर्तनम्, यत्र च स्वाभिमानसहितेन नम्रतापूर्वकेण श्रद्धाभावेन देशस्य गौरवं गीयते तत्र तत्र भक्तिरसः स्वीकर्त्तव्य एव। तत्रापि प्रथमो भगवद्भक्तिरसः, द्वितीयश्च देशभक्तिरसः, अन्यत्र तु भावानुकुलो रसो मन्तव्यः।[3]

---

१. गीतगोविन्दे-देशाख्य-एकतालीताले अष्टपद्याम् ९

२. जीवन आणि साहित्ये पृष्ठे ४५

३. रस सिद्धान्तः स्वरूप और विश्लेषण नामक ग्रन्थे पृष्ठे २८५

